। १५ । यो नं विद्यात्तं जित्वा तस्य गृहात्खादं पानं चो[1]पनि[2]वपेयुः । १६ । यदब्राह्मणानां कृतान्नं तदेषामन्नम् । १७ । रथकारकुले[3] वसतिर्भवति । १८ । इह धृतिः स्वाहेति सायमश्वस्य चतुर्षु पत्सु चतस्रो धृतीर्जुहोति । १९ ।

इति पञ्चमी कण्डिका ।

सवित्रे प्रातरष्टाकपालं निर्वपति । १ । तस्य पुरस्तात्स्विष्टकृत आयनाय स्वाहा प्रायणाय स्वाहेत्यु[4]द्द्रावाञ्जुहोति । २ । ईंकाराय स्वाहेंकृताय स्वाहेत्यश्वचरितानि । ३ । अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यष्टाचत्वारिंशतमश्वरूपाणि । एकमतिरिक्तम् । ४ । अत्र ब्राह्मणो वीणागाथी गायतीत्यददा इत्ययजथा इत्यपच इति तिस्रः । ५ । सवित्रे प्रसवित्र एकादशकपालं मध्यंदिने । सवित्र आसवित्रे द्वादशकपालमपराह्णे । ६ । दक्षिणेनाहवनीयं होता हिरण्यकशिपावुप[5]विशति पारिप्लवं भौवन्यवं[6] चाचिख्यासन्

---

१ चाश्वस्यो॰ DE; चश्वस्य in S on the margin. २ DES omit नि. ३ रथकारस्य गृहे Q; OP add च after ॰कुले.. ४ स्वाहेति द्रुणो॰ OPQ. ५ ॰कम्प्युप्नुप॰ QS. ६ Thus DEQ; तौवन्यधं S, नाभौद्रेममन्यपं O, मन्यवं P.

आश्वमेध



।७। तं दक्षिणेन हिरण्यकशिपोर्ब्रह्मा यजमानश्च ।८। पुरस्तादध्वर्युर्हैरण्ये कूर्चे।९। दक्षिणतो वीणागणकिन[1] उपोपविशन्ति[2]।१०। उपविष्टेष्वध्वर्यो३ इत्यध्वर्युं होतामन्त्रयते।११। हो३यि होतरित्यध्वर्युः[3] प्रतिगृणाति। ओं होतरिति वा।१२। संस्थितयोरध्वर्युः संप्रेष्यति वीणागणकिनः पूर्वैः सह सुकृद्भी राजभिरिमं यजमानं संगायतेति।१३। सायं धृतिषु ह्रूयमानासु राजन्यो वीणागाथी गायतीत्यजिना इत्ययुध्यथा इत्यमुं संग्राममहन्निति तिस्रः।१४।

इति षष्ठी कण्डिका।

सायंप्रातर्ब्राह्मणौ[4] वीणागाथिनौ गायेताम्[5]।१। एवमेतानि सावित्रादीनि संवत्सरं कर्माणि क्रियन्ते।२। सकृद्वाश्वचरितानि जुहोति।३। त्रिंशिमास एष संवत्सरो भवति।४। अपवृक्तास्विष्टिषु वीणागाथिभ्यां शतमनोयुक्तं[6] च ददाति।५। शते चानोयुक्ते चेत्येके[7]।६। ऊर्ध्वमेकादशान्मासादाश्वत्थे व्रजे ऽश्वं बध्नन्ति।७।

---

१ Thus all MSS. २ उपविशन्ति DE, उपोविशन्ति OS. ३ DES omit अध्वर्युः. ४ सायं प्रातर्वा ब्राह्मणौ OPS. ५ गायेयाताम् OPQ. ६ Corrected; all MSS. have शतमानोयुक्तं. ७ चेत्येकेषां DE; षां is added in S on the margin.

तस्मै बडाय यवसमाहरन्ति । ८ । यद्यश्वमुपतपद्विन्देदाग्नेयमष्टाकपालं निर्वपेत्सौम्यं चरुं सावित्रमष्टाकपालम् । ९ । पौष्णं चरुं यदि श्लोणः । १० । रौद्रं चरुं यदि महती देवताभिमन्येत । ११ । वैश्वानरं द्वादशकपालं निर्वपेन्मृगाखरे यदि नागच्छेत् । १२ । यद्यधीयादग्नये ऽंहोमुचे ऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागः । १३ । यदि वडबामधीयात्प्राजापत्यं चरुं द्वादशकपालं वा[१] । १४ । यदि नश्येद्वायव्यं चरुम् । १५ । यदि सेनाभीत्वरी विन्देतेन्द्राय जयत एकादशकपालम् । १६ । यदि प्रासहा नयेयुरिन्द्राय प्रसह्वन एकादशकपालम् । १७ । यद्यन्धः स्यात्सौर्यं चरुमेककपालं वा । १८ । यदि श्वभ्रे ऽवपतेद्द्वै[२]ष्णवं चरुम् । १९ । यद्यविज्ञातेन यक्ष्मणा म्रियेत प्राजापत्यं चरुं द्वादशकपालं वा । २० ।

इति सप्तमी कण्डिका ।

यदमित्रा[३] अश्वं विन्देरन्नन्येतास्य यज्ञः । १ । अथान्यमानीय प्रोक्षेयुः । २ । एतस्य संवत्सरस्य योत्तमामावास्या तस्यामुखां संभरति । ३ । त्रैधातवीया दीक्षणीया । ४ । आकूत्यै प्रयुजे ऽग्नये स्वाहेति चत्वा-

१ Q omits वा. २ श्वभ्रं प्रपतेद्वै॰ OPQ. ३ यद्यमित्रा DE.

अश्वमेध



यौंद्भहणानि जुहोति। ५। स्वाहाधिमाधीताय स्वाहेति त्रीणि वैश्वदेवानि। ६। सोऽयं दीक्षा[1]हुतिकालो[2] विहृद्धः। ७। सप्ताहमन्वहमौद्भहणैर्वैश्वदेवैश्चोत्तरैः प्रचरति। ८। षडुत्तमे ऽहन्यौद्भहणानि जुहोति। सर्वस्मै स्वाहेति पूर्णाहुति[3]मुत्तमाम्। ९। षडहमाग्नावैष्णवेन प्रचरति। १०। सप्तम्यामाग्निक्या त्रिहविषेति वाजसनेयकम्। ११। भुवो देवानां कर्मणेत्यृतुदीक्षाभिः कृष्णाजिनमारोहन्तमभिमन्त्रयते। १२। आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतां जज्ञि बीजमिति जातमुख्यमुपतिष्ठते। १३। विसृष्टवाचि यजमाने संप्रेष्यति वीणागणकिनो देवैरिमं यजमानं संगायतेति। १४। एवं सदो[4]पवसथात्। १५। प्रजापतिना सुत्यास्ववभृथोदयनीयानूबन्ध्योदवसानीयास्विति। १६। देवैरन्ततः। १७।

इत्यष्टमी कण्डिका।

वेदिकाले द्विस्तावा वेदिः। त्रिस्तावो ऽग्निरेकविंशो वा। १। वैश्वानरेण प्रचर्याग्नये गायत्रायेति दशहविषं सर्वपृष्ठां निर्वपति। २। समिद्दिशामाशया न इति

---

१ देवा० Q.  २ ०काले DES.  ३ सर्वाहुति० Q.  ४ सदो० OQ.

यथालिङ्गं याज्यानुवाक्याः । ३ । कस्त्वा युनक्ति स त्वा युनक्त्विति परिधीन्युनक्ति । ४ । अस्य यज्ञस्यर्द्ध्यै मह्यं संनत्या इति सर्वत्रानुषजति । ५ । रथवाहने हविर्धाने राज्जुदालमेकविंशत्यरत्निमग्निष्ठं मिनोति । ६ । पौतुद्रवावभितः । त्रयो बैल्वा दक्षिणतः । त्रय उत्तरतः । त्रयः खादिरा दक्षिणतः । त्रय उत्तरतः । त्रयः पालाशा दक्षिणतः । त्रय उत्तरतः । ७ । खादिराः पालाशा वान्तत इत्येके । ८ । एकादशैकादशिनीः प्राचीः संमि[1]न्वन्तीति कालबविब्राह्मणं भवति । ९ । चतुष्टय्य आपो दिग्भ्यः समाभृताः । १० । तासां वसतीवरीर्गृह्णाति । ११ । श्वो भूते प्रतायते गोतमचतुष्टोमयोः पूर्वो[2] रथंतरसामा । १२ । पशुकाल आग्नेयं सवनीयं[3] पशुमुपाकरोति । [4]ऐकादशिनान्वा । १३ । दक्षिणाकाले यदब्राह्मणानां दिक्षु वित्तं [5]तत्त्रयहे समशः प्रतिविभज्यान्वहं ददाति । १४ ।

इति नवमी कण्डिका ।

प्राचीं दिशमध्वर्यवे । दक्षिणां ब्रह्मणे । प्रतीचीं होत्रे । उदीचीमुद्गात्रे । यदन्यद्भूमेः पुरुषेभ्यश्च । अपि

१ Corrected; all MSS. have समि॰. २ पूर्वा DES. ३ DE omit सवनीयं. ४ Corrected; all MSS. have एका॰. ५ DEO omit तत्.

अश्वमेध



वा प्राचीं होत्रे। प्रतीचीमध्वर्यवे।१। महिषीं ब्रह्मणे ददाति[1]। वावातां होत्रे। परिवृक्तीमुद्गात्रे। पालाकलीम[2]ध्वर्यव इति विज्ञायते।२। पत्नीसंयाजान्तमहः संतिष्ठते।३। संस्थिते ऽहन्यभित आहवनीयं षट्त्रिंशतमाश्वत्थानुपतल्पान्मिन्वन्ति[3]।४। अस्तमित आदित्ये षट्त्रिंशतमध्वर्यव उपतल्पानधिरुह्य खादिरैः स्रुवैः सर्वां रात्रिमन्नहोमाञ्जुहोति। आज्यं मधु तण्डुलान्पृथुकांल्लाजान्करम्भा[4]न्धानाः सक्तून्मसूस्यानि प्रियङ्गुतण्डुलानिति।५। चतुष्टयमेके समामनन्ति। आज्येन जुहोति लाजैर्जुहोति धानाभिर्जुहोति सक्तुभिर्जुहोति[5]।६। एकस्मै स्वाहेत्येतेषामनुवाकानामयुज आज्येन युजो ऽन्नेन। आज्येनान्ततः।७। अत्र प्रयुक्तानां प्रयोक्ष्यमाणानां च मन्त्राणां प्रयोगमेके समामनन्ति।८।

इति दशमी कण्डिका।

विभूर्मात्रा प्रभूः पित्रेत्यश्वनामानि।१। आयनाय स्वाहा प्रायणाय स्वाहेत्युद्द्रावान्।२। अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमान्।३। पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येतं हुत्वाग्नये स्वाहा सोमाय स्वाहेति

---

१ परिवरति DE. २ Sic. ३ विभिन्वन्ति S, चिन्वन्ति DE. ४ करम्भं Q.
५ ०र्जुहोति S only.

20

पूर्वदीक्षाः। ४। पृथिव्यै स्वाहान्तरिक्षाय स्वाहेत्येक-विंशिनीं दीक्षाम्। ५। भुवो देवानां कर्मणेत्यृतु-दीक्षाः। ६। अग्नये स्वाहा वायवे स्वाहेत्येतं हुत्वा-र्वाङ्यज्ञः सं क्रामत्वित्याप्तीः। ७। भूतं भव्यं भविष्य-दिति पर्याप्तीः। ८। आ मे गृहा भवन्त्वित्याभूः। ९। अग्निना तपो ऽन्वभवदित्यनुभूः। १०। स्वाहाधिमा-धीताय स्वाहेति समस्तानि वैश्वदेवानि। ११। दद्भ्यः स्वाहा हनूभ्यां स्वाहेत्यङ्गहोमान्। १२। अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि। १३। ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहेत्योषधिहोमान्। १४। वनस्पतिभ्यः स्वाहेति वनस्पतिहोमान्। १५। मेषस्त्वा पचतैरवत्वित्यपाव्यानि। १६। कूप्याभ्यः स्वाहाद्भ्यः स्वाहेत्यपां होमान्। १७। अम्भोभ्यः स्वाहा नभोभ्यः स्वाहा महोभ्यः स्वाहेत्यम्भांसि नभांसि महांसि[1]। १८।

इत्येकादशी कण्डिका।

---

नमो राज्ञे नमो वरुणायेति यव्यानि। १। मयो-भूर्वातो अभि वातूस्रा इति गव्यानि। २। प्राणाय

---

१ महांसीति OPQ.

अश्वमेध



स्वाहा व्यानाय स्वाहेति संततिहोमान्। ३। सिताय स्वाहासिताय स्वाहेति प्रमुक्तीः। ४। पृथिव्यै स्वाहा-न्तरिक्षाय स्वाहेत्येतं हुत्वा दत्वते स्वाहादन्तकाय स्वाहेति शरीरहोमान्। ५। यः प्राणतो य आत्मदा इति महिमानौ। ६। आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामिति समस्तानि ब्रह्मवर्चसानि। ७। जज्ञि बीजमित्येतं हुत्वाग्नये समनमत्पृथिव्यै समनमदिति संनतिहोमान्। ८। भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ होमौ। ९। यदक्रन्दः प्रथमं जायमान इत्यश्वस्तोमीयं हुत्वैकस्मै स्वाहेत्येताननुवाकान्पुनःपुन-रभ्यासं रात्रिशेषं हुत्वोषसे स्वाहेत्युषसि। व्युच्छन्त्यै स्वाहेति व्युच्छन्त्याम्। व्युष्ट्यै स्वाहेति व्युष्टायाम्। उदेष्यते[1] स्वाहेत्युपोदयम्। उद्यते स्वाहेत्युद्यति। उदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहेत्युदिते हुत्वा प्रज्ञातानन्नपरिशेषान्नि[2]दधाति[3]। १०।

इति द्वादशी कण्डिका।

प्रतायत एकविंश उक्थ्यो महानाम्नीसामा। १। अन्तरेणाग्रयणोक्थ्यौ प्राकृतं सोममभिषुत्य यः प्राणतो

१ उपोदयते Q. २ ०परिवेषयं नि० DE. ३ ददाति instead of निदधाति O.

य आत्मदा इति महिमानौ गृह्णाति। राजतेन पूर्वं सौवर्णेनोत्तरम्। २। सूर्यस्ते महिमेति पूर्वं सादयति। चन्द्रमास्ते महिमेत्युत्तरम्। ३। आयुर्यज्ञस्य पवते मधु प्रियं पिता[1] देवानां जनिता विभावसुः[2]। दधाति[3] रत्नं स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो[4] रस इत्यश्वस्य ग्रीवासु सौवर्णं[5] निष्कं प्रतिमुच्याग्निस्ते वाजिन्युङ्ङनु त्वारभ इति वालधावश्वमन्वारभ्य बहिष्पवमानं सर्पन्त्यग्निर्मूर्धेति। ४। उद्गातारमपरुध्याश्वमुद्गीथाय वृणीते। ५। तस्मै वडबा उपरुन्धन्ति। ६। ता यदभिहिङ्करोति स उद्गीथः। यत्प्रत्यभिहिङ्कुर्वन्ति स उपगीथः। ७। उदगासीदश्वो मेध्यो यज्ञिय इति शतेन शतपलेन[6] च निष्केणोद्गातारमुपशिक्ष्येमां देवतामुद्गायन्तीमनूद्गायेति संप्रेष्यति। ८। तेन हिरण्येन स्तोत्रमुपाकरोति। ९। बर्हिः[7]स्थाने भवति। १०। नमो राज्ञे नमो वरुणायेति वेतसशाखयाश्वतूपरगोमृगानग्निष्ठ उपाकरोति येषां[8] चानादिष्टो[9] देशः। ११। प्लक्षशाखाभिरितरान्पशूनश्वे पर्यङ्क्ष्यान्। आग्नेयं कृष्ण-

---

१ प्रियो Q. २ विभूवसुः (like Ṛigveda 9. 86. 10) O only. ३ ददाति O, दधातु S. ४ इन्द्रियं PQS. ५ सौवर्णं DEO. ६ शतबलेन DES, शतपतेन OP. ७ The Visarga is missing in all MSS. ८ एषां PQ, तेषां S. ९ चानिर्दिष्टो DE.

अश्वमेध



ग्रीवं पुरस्ताल्ललाटे। पौष्णमन्वश्वम्। ऐन्द्रापौष्णमुपरिष्टाद्ग्रीवासु। आग्नेयौ कृष्णग्रीवौ बाहुवोः। त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः। शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे। सौर्ययामौ श्वेतं कृष्णं च पार्श्वयोः। धात्रे पृषोदरमधस्तात्। सौर्यं बलक्षं पुच्छे। १२। अन्यचाग्निष्ठादष्टादशिनः। १३।

इति त्रयोदशी कण्डिका।

रोहितो धूम्ररोहित इति नवनव प्रतिविभज्यैन्द्राग्नदशमानेके समामनन्ति। १। एवमारण्यान्। २। तान्यूपान्तरालेषु धारयन्ति। ३। इन्द्राय राज्ञे सूकर इत्येकादश दशत आलभ्यन्ते। ४। वसन्ताय कपिञ्जलानालभते[१]। ग्रीष्माय कलविङ्कान्। वर्षाभ्यस्तित्तिरीन्। शरदे वर्तिकाः[२]। हेमन्ताय ककरान्। शिशिराय विकिरान्[३]। ५। कृष्णा भौमाः। धूम्रा आन्तरिक्षाः[४]। बृहन्तो दैवाः[५]। शबला वैद्युताः। सिध्मास्तारका इति पञ्चदशिनः। ६। कृष्णग्रीवा आग्नेयाः। बभ्रवः सौम्याः।

१ °लभंते DE. २ वर्तिकान् DEQ. ३ Thus DE only, but in accordance with Âpast. Dharmasûtra 1. 17. 32; विकिकिरान् S, विककरान् OPQ like Vâjas. S. 24. 20. ४ अन्तरिक्ष्याः Q. ५ दिव्याः S in accordance with Vâjas. S. 24. 10.

उपध्वस्ताः सावित्राः। सारस्वत्यो वत्सतर्यः। पौष्णाः श्यामाः। पृश्नयो मारुताः। बहुरूपा वैश्वदेवाः[१]। वशा द्यावापृथिव्याः[२]। ७। कृष्णग्रीवा इत्युक्तम्। ८। एता ऐन्द्राग्नाः। पृश्नयो मारुताः। कृष्णा वारुणाः। कायास्तूपराः। ९। अग्नये ऽनीकवते प्रथमजानालभते[३]। मरुद्भ्यः सांतपनेभ्यः सवात्यान्[४]। मरुद्भ्यो गृहमेधिभ्यो बाष्कान्[५]। मरुद्भ्यः क्रीडिभ्यः संसृष्टान्। मरुद्भ्यः स्वतवद्भ्यो ऽनुसृष्टान्। १०। कृष्णग्रीवा इत्युक्तम्। ११। एता ऐन्द्राग्नाः। प्राशृङ्गा ऐन्द्राः। बहुरूपा वैश्वकर्मणाः। १२। पितृभ्यः सोमवद्भ्यो[६] बभ्रून्धूम्रानूकाशान्। पितृभ्यो बर्हिषद्भ्यो धूम्रान्बभ्रूनूकाशान्। पितृभ्यो ऽग्निष्वात्तेभ्यो धूम्रान्रोहितांस्त्रैयम्बकान्[७]। १३। कृष्णाः पृषन्त इत्येके। १४।

इति चतुर्दशी कण्डिका।

---

१ वैश्वदेव्याः Q. २ ०पृथिवीयाः S in accordance with Vâjas. S. 24. 14. ३ ०लभंते DE. ४ सावात्ता DEP, सावात्तान् O, सावता Q. ५ Thus DEP; बाष्पान् Q, बष्कीयान् S, मुष्तान् P; बष्किहान् Vâjas. S. 24. 16. ६ सोमपेभ्यो DES. ७ Corrected; the MSS. (apparently under the influence of Vâjas. S. 24. 18) have ०रोहितास्त्रैयम्बकाः.

अश्वमेध



श्वेता आदित्याः। १। कृष्णग्रीवा इत्युक्तम्। २। एता ऐन्द्राग्नाः। बहुरूपा वैश्वदेवाः। प्राश्टङ्गाः शुनासीरीयाः[१]। श्वेता वायव्याः। श्वेताः सौर्या इति चातुर्मास्याः पशवः। ३। द्वयानैकादशिनानालभन्ते। प्राकृतानाश्वमेधिकांश्च। ४। अग्नये ऽनीकवत इत्याश्वमेधिकान्। सोमाय स्वराज्ञ इति द्वंद्विनः। ५। उपाकृताय स्वाहेत्युपाकृते जुहोति। आलब्धाय स्वाहेति नियुक्ते। हुताय स्वाहेति हुते। ६। पत्नयो ऽश्वमलंकुर्वन्ति। महिषी वावाता परिवृक्तीति। ७। शतंशतमेकैकस्याः सचिवाः। राजपुत्रीर्दाराश्चोग्राणामराज्ञां[२] हृतग्रामण्यामिति[३]। ८। सहस्रंसहस्रं मणयः सुवर्णरजतसामुद्राः। ९। वालेषु मणीनावयन्ति। भूरिति सौवर्णान्महिषी प्राग्वहात्। भुव इति राजतान्वावाता प्रत्यग्वहात्प्राक् श्रोणेः। सुवरिति सामुद्रान्परिवृक्ती प्रत्यक् श्रोणेः। १०। वालेषु कुमार्यः शङ्खमणीनुपग्रथ्नन्त्य[४]प्रसंसाय। न वा। ११। अथास्य स्वदेशाना[५]ज्येना[६]भ्यञ्जन्ति। वसवस्त्वाञ्जन्तु गायत्रेण छन्दसेति गौल्गुलवेन महिषी। रुद्रा इति कासाम्बवेन वावाता।

---

१ ०सौर्याः OPQ. २ ०ग्राणां राज्ञां DEQ. ३ Corrected ( comp. comment. on Pâṇini 7. 1. 58 ); the MSS. have ०ग्रामण्या इति. ४ ०नुपनिग्टह्णन्त्य० Q. ५ स्वदेशेना० DE. ६ S omits ०आज्येन.

आदित्या इति मौस्तकृतेन परिवृक्ती । १२ । गौल्गुल-वेन सुरभिरश्वो मेधमुपा[१]कृतः । देवाँ उपप्रेष्यन्वाजि-न्वर्चोदा लोकजिद्भव ॥ कासाम्बवेन सुरभिरश्वो मेधमु-पाकृतः । देवाँ उपप्रेष्यन्वाजिन्वर्चोदा लोकजिद्भव ॥ मौस्तकृतेन सुरभिरश्वो मेधमुपा[२]कृतः । देवाँ उपप्रे-ष्यन्वाजिन्वर्चोदा लोकजिद्भवेत्येतैश्च[३] प्रतिमन्त्रम् । १३ ।

इति पञ्चदशी कण्डिका ।

युञ्जन्ति ब्रध्नमिति दक्षिणस्यां युगधुर्येतमश्वं युनक्ति । १ । युञ्जन्त्यस्य काम्येति प्रष्टी[४] । २ । केतुं कृण्वन्नकेतव इति रथे ध्वजमवगूहति । ३ । जीमूतस्येवेति कवच-मध्यूहते । ४ । धन्वना गा इति धनुरादत्ते । ५ । वक्ष्यन्तीवेति ज्यामभिमृशति । ६ । ते आचरन्तीति धनोरार्त्नी संमृशति । ७ । बह्वीनां पिता बहुरस्य पुत्र इति पृष्ठ इषुधिं[५] निनह्यति । ८ । रथे तिष्ठन्नयति वाजिन इति सारथिमभिमन्त्रयते । ९ । तीव्रान्घोषा-

१ मेध उपा० DES. २ मेध उपा० DE. ३ DEO omit च. ४ All MSS. have प्रष्टि, which has been corrected into प्रष्टी in S alone. ५ इषुं DE.

न्क्रमस्व वृषपाणय इत्यश्वान् । १० । स्वादुषंसदः पितरो वयोधा इति तिसृभिः पितॄनुपतिष्ठते । ११ । आजीते परि वृङ्धि न इत्यात्मानं[1] प्रत्यभिमृश्या जङ्घन्तीत्यश्वाजनिमादायाहिरिव भोगैरिति हस्तघ्नम[2]भिमन्त्रयते । १२ । वनस्पते वीड्वङ्गो हि भूया इति पञ्चभी रथम् । १३ । आमूरज प्रत्यावर्तयेमाः केतुमदिति दुन्दुभीन्संह्रादयन्ति । १४ । आक्रान्वाजी क्रमैरत्यक्रमीद्वाजीत्युदगु[3]दक्रान्तमभिप्रयाय ये ते पन्थानः सवितरित्यध्वर्युर्यजमानं वाचयति । १५ । स्वयं वाजिन्नपो ऽवजिघ्रेत्यपो ऽश्वमवघ्राप्य यद्वातो अपो अगमदिति प्रदक्षिणमावर्तयति[4] । १६ । यतः प्रयाति तदवतिष्ठते । १७ । वि ते मुञ्चामीत्येतमश्वं विमुच्य रथवाहनं हविरस्य नामेति रथवाहने रथमत्याधाय[5] द्यौस्ते पृष्ठमित्यश्वस्य[6] पृष्ठं संमार्ष्टि । १८ । लाजी३ञ्छाची३न्यशो ममां३ इति पत्नयो ऽश्वायान्न[7]परिशेषानुपवपन्ति । १९ । यद्योपन्युप्तमत्ति तस्यै प्रजा राष्ट्रं भवति । २० ।

इति षोडशी कण्डिका ।

१ इत्यश्मानं Q. २ Corrected; हस्तक्रम० P, सहस्तम० DE, हस्तम० the other MSS. ३ द्यौस्ते पृष्ठमिति (Taitt. S. 5. 7. 25. 1) instead of इत्युदग DE. ४ ०वर्तयते PQ, ०वर्तते S. ५ ०त्यादधाति OP. ६ ०त्यश्व DE. ७ ऽश्वमन्न० DE.

आक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठमित्यश्वमभिमन्त्र्य यथोपाकृतं नियुज्य प्रोक्ष्योपपाययति। १। यद्युपपाय्यमानो न पिबेदग्निः पशुरासीदित्युपपाययेत् ।२। समिद्धो अञ्जन्कृदरं मतीनामित्यश्वस्याप्रियो भवन्ति।३। मेषस्त्वा पचतैरवत्विति पर्यग्नौ क्रियमाणेऽपाव्यानि जुहोति। ४। पर्यग्निकृतानारण्यानुत्सृजन्ति ।५। वडबे पुरुषी च। ६। अजः पुरो नीयतेऽश्वस्य ।७। वेतसशाखायां[१] ताप्यँ कृत्यधीवासं हिरण्यकशिपु चास्तीर्य सौवर्णं रुक्ममुपरिष्टात्कृत्वा तस्मिन्नश्वतूपरगोमृगान्निघ्नन्ति। प्लक्षशाखास्वितरान्पशून् ।८। [२]श्यामूलेन क्षौमेण वाश्वं संज्ञपयन्ति। स्यन्द्याभिरितरान्पशून् ।९। प्राणाय स्वाहा व्यानाय स्वाहेति संज्ञप्यमाने पशावाहुती जुहोति[३]। संज्ञप्ते वा ।१०। यामेन साम्ना प्रस्तोतानूपतिष्ठते। ११। अम्बे अम्बाल्यम्बिक इति प्रतिप्रस्थाता पत्नीरु[४]दानयति। १२। ता दक्षिणान्केशपक्षानुद्ग्रथ्य सव्यान्प्रस्रस्य[५] दक्षिणानूरूनाघ्नानाः सिग्भिरभिधून्वत्यस्त्रिः प्रदक्षिणमश्वं परियन्त्यवन्तीस्थेति। १३। सव्यानुद्ग्रथ्य दक्षिणान्प्रस्रस्य[५] सव्यानूरू-

---

१ ०शाखया Q. २ Thus here all MSS.; comp. श्यामूलं above 5. 29. 3.
३ ०हुतीर्जुहोति OP. ४ पत्नीमु० OQS. ५ विस्रस्य DE; comp. 14. 22. 1, 2.

आश्वमेध



नाघ्नाना अनभिधून्वत्यस्त्रिः प्रतिपरियन्ति । १४ । प्रदक्षिणमन्ततो यथा पुरस्तात् । १५ । नवकृत्वः संपादयन्ति । १६ । अम्बे अम्बाल्यम्बिक इति महिष्यश्व-मुपसंविश्य । १७ ।

इति सप्तदशी कण्डिका ।

गणानां त्वा गणपतिं हवामह इत्यभिमन्त्र्याहं स्यां त्वं स्याः सुरायाः कुलजः स्यात्तन्नेमांश्चतुरः पदो व्यतिषज्य शयावहा इति[1] पदो व्यतिषजते[2] । १ । तौ सह चतुरः पदः सं प्र सारयावहा इति पदः संप्रसारयते[3] । २ । सुभगे काम्पीलवासिनीति क्षौमेण वाससाध्वर्यु-र्महिषीमश्वं च प्रच्छाद्य वृषा वामित्यभिमन्त्रयते । ३ । उत्सक्थ्योर्गृदं धेहीति प्रजननेन प्रजननं संधाया[4]म्बे अम्बाल्यम्बिक इति महिष्यश्वं गर्हते । ४ । ऊर्ध्वामेना-मुच्छ्रयतादिति पत्नयो ऽभिमेधन्ते । ५ । त्रिर्महिषी[5] गर्हते । त्रिः पत्नयो ऽभिमेधन्त उत्तरयोत्तरयर्चा[6] । ६ । दधिक्राव्णो अकारिषमिति सर्वाः सुरभिमतीमृच-

१ शयीवह्वीति OPQ. २ Thus P only; ०षजेते the other MSS. ३ ०सारयेते PQS. ४ संनिधाया० OPQ. ५ महिष्यश्वं DE. ६ उत्तरोत्तरयर्चा DE.

मन्त्रतो जपित्वापोहिष्ठीयाभिर्मार्जयित्वा गायत्री त्रिष्टुबिति द्वाभ्यां सौवर्णीभिः सूचीभिर्महिष्यश्वस्यासिपथान्कल्पयति प्राक्क्रोडात्। एवमुत्तराभ्यां राजतीभिर्वावाता प्रत्यक्क्रोडात्प्राङ्नाभेः। एवमुत्तराभ्यां लौहीभिः सीसाभिर्वा परिवृक्ती शेषम्। ७। तूष्णीं तूपरगोमृगयोरसिपथान्कल्पयन्ति। ८। कस्त्वा छ्यति कस्त्वा वि शास्तीत्यश्वस्य त्वचमाच्छ्यति। ९। चन्द्रं नाम[१] मेदः। तदुद्धरति। १०। नाश्वस्य वपा विद्यते। ११। उद्धरतीतरेषाम्। १२। कर्णं[२] छित्त्वा त्यङ्गेषूपसंनह्यति[३]। १३। नाश्वस्य गुदो विद्यते। १४। शृतासु वपासूत्तरत उपरिष्टादग्नेर्वेतसशाखायामश्वतूपरगोमृगाणां वपाः सादयति[४]। १५।

इत्यष्टादशी कण्डिका।

दक्षिणतः प्लक्षशाखास्वितरेषां पशूनाम्। १। पूर्वौ परिवप्य[५]महिमानौ हुत्वाश्वतूपरगोमृगाणां वपाः समवदाय संप्रेष्यति। २। प्रजापतये ऽश्वस्य तूपरस्य

---

१ चन्द्रनाम PS. २ कटं DE, कण्ठं S. ३ ०पनह्यति QS. ४ Q adds पश्चात्.
५ परिवप्यौ Q.

अश्वमेध



गोमृगस्य वपानां मेदसामनुब्रूहि। प्रजापतये ऽश्वस्य तूपरस्य गोमृगस्य वपानां मेदसां प्रेष्येति संप्रैषौ। चन्द्रवपयोर्मेदसामनुब्रूहि चन्द्रवपयोर्मेदसां प्रेष्येति वा ।३। समवदायेतरेषां वपाः संप्रेष्यति।४। विश्वेभ्यो देवेभ्य उस्राणां छागानां मेषाणां वपानां मेदसामनुब्रूहि। विश्वेभ्यो देवेभ्य उस्राणां छागानां मेषाणां वपानां मेदसां प्रेष्येति संप्रैषौ।५। उत्तरौ परिवप्य-महिमानौ[1] हुत्वा चात्वाले मार्जयित्वाभितो ऽग्निष्ठं ब्रह्मोद्याय पर्युपविशेते[2]। दक्षिणो[3] ब्रह्मा। उत्तरो[4] होता।६। किं स्विदासीत्पूर्वचित्तिरित्येतस्यानुवाकस्य पृष्टानि होतुः प्रतिज्ञातानि ब्रह्मणः।७। ब्रह्मण उदञ्चं विजयं संज्ञापयन्ति।८। प्रजापतये ऽश्वस्य तूपरस्य गोमृगस्यास्थि लोम च तिर्यगसंभिन्दन्तः सूकरविशस[5] विशसतेति संप्रैषवत्कुर्वन्ति।९। अश्वस्य लोहितं स्विष्टकृदर्थं निदधाति।१०। शफं गोमृगकण्ठं[6] च माहेन्द्रस्य स्तोत्रं प्रत्यभिषिञ्चति।११। हिरण्यगर्भः समवर्तताग्र इति षट् प्राजापत्याः पुरस्तादभिषेकस्य

---

१ महिमानौ परिवप्यौ OPQ. २ ॰विशेते S. ३ दक्षिणतो OP, दक्षिणतो दक्षिणो S. ४ उत्तरतो DE. ५ सूकरविवसं Q, सूकरशविसे DE, सूकर only S. ६ ॰कर्णं PQ.

जुहोति। अयं पुरो भुव इति षट् च[1] प्राणभृतः। १२। व्याघ्रचर्मणि सिंहचर्मणि वाभिषिच्यते। १३।

इत्येकोनविंशी कण्डिका।

[2]ऋषभचर्माभिषिच्यमानस्योपरि धारयन्ति[3]। १। सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन सौवर्णेन शतमानेन शतक्षरेण शतकृष्णलेन यजमानस्य शीर्षन्नधिनिदधाति[4]। २। प्रजापतेस्त्वा प्रसवे पृथिव्या नाभावन्तरिक्षस्य बाहुभ्यां दिवो हस्ताभ्यां प्रजापतेस्त्वा परमेष्ठिनः [5]स्वाराज्येनाभिषिञ्चामीति महिम्नोः संस्रावेणाभिषिञ्चति। ३। वायव्यैरभिषिञ्चतीत्येके। ४। मधुश्च माधवश्चेति मासनामभिरभिषिच्यमानमभिजुहोति। ५। वसन्ताय स्वाहा ग्रीष्माय स्वाहेत्यृतुभ्यः षट्। ६। वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। यो अस्माँ अभिदासत्यधरं गमया तमः॥ वि रक्षो वि मृधो नुद वि वृत्रस्य हनू रुज। वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासत इति वैमृधीभ्यां यजमानो मुखं विमृष्टे। ७। ऊर्ध्वा अस्य समिधो भवन्तीति

१ DEQ omit च. २ वृषभ० DE. ३ ०स्योपरिष्टाद्धारयति DE.
४ ०भिनिदधाति S. ५ साम्राज्येना० DE.

अश्वमेध



प्राजापत्याभिराप्रीभिरभिषिच्यमानस्य हस्तं गृह्णाति ।८। प्रजापतिश्चरति गर्भे अन्तः[१] ॥ प्रजापतिं प्रथमं यज्ञियानां देवानामग्रे यजतं यजध्वम् । स नो ददातु द्रविणं सुवीर्यं रायस्पोषं वि ष्यतु नाभिमस्मे ॥ तवेमे लोकाः प्रदिशो दिशश्च परावतो निवत उद्वतश्च । प्रजापते विश्वसृज्जीवधन्य इदं नो देव प्रति हर्य हव्यमिति षट् प्राजापत्या उपरिष्टादभिषेकस्य जुहोति । ९ । प्राची दिशामिति षट् चापानभृतः । १० । अच[२] यजमानो जागतान्विष्णुक्रमान्क्रामति । ११ ।

इति विंशी कण्डिका ।

पशुकाल उत्तरत उपरिष्टादग्नेर्वैतसे कटेऽश्वं प्राञ्चं यथाङ्गं[३] चिनोति । १ । एवं पुरस्तात्प्रत्यञ्चं तूपरम् । पश्चात्प्राचीनं गोमृगम् । २ । दक्षिणतः प्लक्षशाखास्वितरान्पशूनासादयति । ३ । वपावच्चर्या । ४ । हविष इत्यन्तौ नमति । ५ । आक्रान्वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठमि[४]ति वैतसेन कटेनाश्वतूपरगोमृगान्संवेहु-

१ Q adds इति चतस्रः. २ Q omits अच, S has अथ instead. ३ यथालिङ्गं DEQ. ४ OS add पृथिवी सधस्थं ( Taitt. S. 5. 7. 25 ).

तान्कुत्वेलुवर्दाय स्वाहा बलिवर्दाय स्वाहेत्यश्वम[1]भि-
जुहोति। ६। अथ कटमनुप्रहरति। ७। ये ऽश्वस्य
हुतस्य गन्धमा[2]जिघ्रन्ति सर्वे ते पुण्यलोका भवन्तीति
विज्ञायते। ८। हविषा प्रचर्याज्यमवदानं[3] कृत्वा
स्तेगान्दंष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरित्येतैश्चतुर्दशभिरनु-
वाकैः प्रतिमन्त्रं शरीरहोमाञ्जुहोति। ९। दिवाकीर्त्यं
पञ्चदशम्। अरण्येऽनुवाक्यं षोडशम्। द्यौस्ते पृष्ठमि-
त्येतं सप्तदशमाज्येनैव। १०। यदक्रन्दः प्रथमं जायमान
इत्येतैस्त्रिभिरनुवाकैः षट्त्रिंशतमश्वस्तोमीयाञ्जुहोति
। ११। क्रमैरत्यक्रमीदित्येतां षट्त्रिंशीम्। १२। अष्टा-
दश जुहोतीत्येके। १३। इमा नु कं भुवना सीषधेमेति
द्विपदाः। १४। अन्ततो ऽश्वस्य लोहितेन शृतेन[4]
स्विष्टकृतं यजति। १५।

इत्येकविंशी कण्डिका।

गोमृगकण्ठेन प्रथमामाहुतिं जुहोति। अश्वशफेन
द्वितीयाम्। अयस्मयेन कमण्डलुना तृतीयाम्। १।
पत्नीसंयाजान्तमहः संतिष्ठते। २। श्वो भूते प्रतायते

१ DES omit अश्वं. २ धूममा॰ DE ३ ॰ज्यवदवदामं Q. ४ DES omit
शृतेन.

आश्वमेध



सर्वस्तोमो ऽतिरात्रो बृहत्सामा। ३। पशुकाले गव्यानेकादशिनानालभन्ते प्राजापत्यान्वैश्वदेवान्वा। प्राजापत्यमृषभं तूपरं सर्वरूपं सर्वेभ्यः कामेभ्यो द्वादशमुपालम्भ्यम्। ४। समानमावभृथात्। ५। अवभृथेन प्रचर्यात्रेयं शिपिविष्टं खलतिं विक्लिधं शुक्लं पिङ्गाक्षं तिलकावलमवभृथमभ्यवनीय तस्य मूर्धञ्जुहोति मृत्यवे स्वाहा भ्रूणहत्यायै स्वाहा जुम्बकाय स्वाहेति तिस्रः। ६। तस्मै शतमनोयुक्तं च ददाति। ७। शते चानोयुक्ते चेत्येके। ८। सह पुण्यकृतः पापकृतश्च हस्तसंरब्धा ग्राममभ्युदायन्ति। सर्वे ते पुण्यलोका भवन्तीति विज्ञायते। ९। सौरीर्नव श्वेता वशा अनूबन्ध्या भवन्ति। १०। अथैकेषाम्। रोहिणीरैन्द्रीः सौरीः श्वेताः शितिपृष्ठा बार्हस्पत्याः। ११। अत्र वा दंष्ट्रिन आलभते[4]। १२। छगलः कल्माषः किकिदीविर्विदीगय इति ते त्रयस्त्वाष्ट्राः। १३। पात्नीवत आग्नेय ऐन्द्राग्न आश्विनस्ते विशालयूप आलभ्यन्ते। १४।

इति द्वाविंशी कण्डिका।

१ °स्तोमाति° DES. २ द्वादशाद्दशु° OPS. ३ Thus S only; all other MSS. have शतमानो°. ४ आलभेत OS, आलभन्ते DE; comp. Taitt. Br. 3. 9. 9. 3.

अथैकेषाम्। त्रैतानां प्रथमजं [1]कालकाभ्रुमश्विभ्यां मध्यमे विशाल[2]यूप आलभते[3]। तेषामेव मध्यमजमूर्जे दक्षिणे। उत्तमजं पृथिव्या उत्तरे। १। तेषां पशुपुरोडाशानमये ऽंहोमुचे ऽष्टाकपाल इति दशहविषं मृगारेष्टिमनुनिर्वपति[4]। २। समानं तु स्विष्टकृदिडम्। ३। अग्नेर्मन्वे प्रथमस्य प्रचेतस इति यथालिङ्गं याज्यानुवाक्याः। ४। त्रैधातवीययो[5]दवस्यति। ५। तस्यां सहस्रं ददाति। ६। उदवसाय विशालयूपमेके समामनन्ति। ७। तदाहुर्द्वादश ब्रह्मौदनान्संस्थिते निर्वपेद्द्वादशभिर्वेष्टिभिर्यजेतेति। ८। तदु तथा न कुर्यात्। द्वादशैव ब्रह्मौदनान्संस्थिते निर्वपेत्। तेषु व्यहं द्वादशानि शतानि ददाति। ९। पिशङ्गास्त्रयो वासन्ता इत्यृतुपशुभिः संवत्सरं यजते। १०। अथैकेषाम्। आग्नेया वासन्ताः। ऐन्द्रा[6] ग्रैष्माः। मारुताः पार्जन्या वा[7] वार्षिकाः। ऐन्द्रावारुणाः शारदाः। ऐन्द्राबार्हस्पत्या हैमन्तिकाः। ऐन्द्रावैष्णवाः शैशिराः।

---

१ Sic. काकाभ्रुम॰ S, कालकां बभ्रुम॰ DE. २ विशाख॰ Q. ३ चालभन्ते OP. ४ ॰निर्वपन्ति DEO. ५ त्रैधातवीये॰ OQ. ६ ऐन्द्राग्ना DES. ७ DE QS omit वा.

अथैकेषाम्। त्रैतानां प्रथमजं [1]कालकाभ्रुमश्विभ्यां मध्यमे विशाल[2]यूप आलभते[3]। तेषामेव मध्यमजमूर्जे दक्षिणे। उत्तमजं पृथिव्या उत्तरे। १। तेषां पशुपुरोडाशानग्नये ऽंहोमुचे ऽष्टाकपाल इति दशहविषं मृगारेष्टिमनुनिर्वपति[4]। २। समानं तु स्विष्टकृदिडम्। ३। अग्नेर्मन्वे प्रथमस्य प्रचेतस इति यथालिङ्गं याज्यानुवाक्याः। ४। त्रैधातवीययो[5]दवस्यति। ५। तस्यां सहस्रं ददाति। ६। उदवसाय विशालयूपमेके समामनन्ति। ७। तदाहुर्द्वादश ब्रह्मौदनान्संस्थिते निर्वपेद्द्वादशभिर्वैष्टिभिर्यजेतेति। ८। तदु तथा न कुर्यात्। द्वादशैव ब्रह्मौदनान्संस्थिते निर्वपेत्। तेषन्वहं द्वादशानि शतानि ददाति। ९। पिशङ्गास्त्रयो वासन्ता इत्यृतुपशुभिः संवत्सरं यजते। १०। अथैकेषाम्। आग्नेया वासन्ताः। ऐन्द्रा[6] ग्रैष्माः। मारुताः पार्जन्या वा[7] वार्षिकाः। ऐन्द्रावारुणाः शारदाः। ऐन्द्राबार्हस्पत्या हैमन्तिकाः। ऐन्द्रावैष्णवाः शैशिराः।

---

१ Sic. काकाभ्रुम॰ S, कालकां बभ्रुम॰ DE. २ विशाख॰ Q. ३ आलभन्ते OP. ४ ॰निर्वपन्ति DEO. ५ त्रैधातवीयो॰ OQ. ६ ऐन्द्राग्ना DES. ७ DE QS omit वा.

पुरुषमेध, सर्वमेध



११। संवत्सराय निवक्षस इति द्वयोर्द्वयोर्मासयोः पशुबन्धेन यजते। १२। संतिष्ठते ऽश्वमेधः। १३।

इति त्रयोविंशी कण्डिका।

पञ्चाहः पुरुषमेधः। १। ब्राह्मणो राजन्यो वा यजेत। २। ओजो वीर्यमा[1]प्नोति। सर्वा व्युष्टीर्व्यश्नुते। ३। एकादशसु यूपेष्वेकादशाग्नीषोमीयाः। ४। पञ्चशारदीयवदहानि[2]। अग्निष्टोमो वोपोत्तमः। ५। देव सवितः॥ तत्सवितुः॥ विश्वानि देव सवितरिति तिस्रः सावित्रीर्हुत्वा मध्यमे ऽहन्पशूननुपाकरोति। ६। द्वयानेकादशिनानुपाकृत्य पुरुषान्। ७। ब्रह्मणे ब्राह्मणमालभत इत्येतद्यथासमाम्नातम्। ८। तान्यूपान्तरालेषु धारयन्ति। ९। उपाकृतान्दक्षिणतो ऽवस्थाय ब्रह्मा सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन परा चानुशंसति। १०। पर्यग्निकृतानुदीचो नीत्वोत्सृज्याज्येन तद्देवता आहुतीर्हुत्वा द्वयैरैकादशिनैः संस्थापयति[3]। ११। दक्षिणाकाले यद्ब्राह्मणानां दिक्षु वित्तं तत्सभूमि ददाति यथाश्वमेधे। १२। ब्राह्मणो यजमानः सर्व-

१ वन्नमा० DE. २ ०सत्यश्चाचानि S. ३ ०यन्ति OP.

वेदसम् ।१३। एतस्मिन्नेवाहन्यश्वमेधवदभिषेकः। १४। एकादशानूबन्ध्याः सौरीर्वैश्वदेवीः प्राजापत्या वा। १५। त्रैधातवीययोदवसाय पृथगरणीष्वग्नीन्समारोप्योत्तर[1]-नारायणेनादित्यमुपस्थायारण्यमवतिष्ठेत[2] । १६। ग्रामं वा प्रविश्य त्रैधातवीयया यजेत । १७ !

इति चतुर्विंशी कण्डिका।

---

सौत्रामण्या मैत्रावरुण्या चामिक्षया साकंप्रस्थायीयेन पञ्चबिलेन चरुणा पञ्चशारदीयेनेति । १ । पञ्चबिलस्य चरोर्विज्ञायते। आज्य आग्नेयः पूर्वस्मिन्बिले। दधन्यैन्द्रो दक्षिणे । शृते प्रतिदुहि नीतमिश्रे वा वैश्वदेवः पश्चिमे। अप्सु मैत्रावरुण उत्तरे। पयसि बार्हस्पत्यो मध्यमे । २ । सर्वमेधो दशरात्रः । ३ । राजा यजेत यः कामयेत सर्वमिदं भवेयमिति । ४। एकशतविधोऽग्निः । ५ । अग्निष्टुदग्निष्टोमः प्रथममहः । सर्वमाग्नेयं भवति । ६ । इन्द्रस्तुदुक्थ्यो द्वितीयः । सर्वमैन्द्रम् । ७ । सूर्यस्तुदुक्थ्यस्तृतीयः । सर्वं सौर्यम् । ८ । वैश्वदेव उक्थ्यश्चतुर्थः । सर्वं वैश्वदेवम् । ९ । आश्वमेधिकं मध्यमं पञ्चममहः । तस्मिन्नश्वं मेध्यमालभते ।

---

[1] ०न्तरेण QS. [2] ०मुपतिष्ठेत DEP.

पुरुषमेध, सर्वमेध



१०। पौरुषमेधिकं मध्यमं षष्ठम्। तस्मिन्पुरुषान्। ११। अप्तोर्यामः सप्तमः। तस्मिन्सर्वान्मेध्या[1]नालभते। १२। वपा वपावतां जुहोति। त्वच उत्कृत्यावपानाम्[2]। १३। शुष्कानार्द्रांश्चौषधिवनस्पतीन्संवृश्च्या[3]हवनीये ऽनुप्रकिरन्ति। १४। प्रातःसवने सन्नेषु नाराशंसेष्वन्नमन्नं जुहोति। १५। [4]सर्वस्याप्त्यै सर्वस्यावरुद्ध्या इति विज्ञायते। १६। एवं माध्यंदिने तृतीयसवने च। १७। अष्टमं त्रिणवम्। १८। नवमं त्रयस्त्रिंशम्। १९। विश्वजित्सर्वपृष्ठो ऽतिरात्रो दशममहः। २०। दक्षिणाकाले यद्ब्राह्मणानां दिक्षु वित्तं तत्सभूमि सपुरुषं ददाति यथाश्वमेधे यथाश्वमेधे। २१।

इति पञ्चविंशी कण्डिका।

## इति विंशः प्रश्नः॥

---

१ ०न्मेधा० PQ. २ उत्कृत्य वपानां QS. ३ ०न्त्संवृश्च्या० DE, ०न्त्संवृच्या० OP.
४ OP add सर्वं जुहोति.

# ओम् ॥

द्वादशाहेन प्रैव जायते ऽभि स्वर्गं लोकं जयत्येषु लोकेषु प्रतितिष्ठति । १ । साग्निचित्यो भवति । २ । सत्त्रमहीनश्च । ३ । दीक्षितमदीक्षिता याजयेयुरहीने । एत एवर्त्विजो यजमानश्च सत्त्रे । ४ । तस्माद्द्वादशाहेन न याज्यं पाप्मनो व्यावृत्त्या इति विज्ञायते । ५ । ऋध्नोति यो द्वादशाहेन यजते । ६ । ऋध्नोति यः प्रतिगृह्णातीत्येके । ७ । ऋत्विजो यजमानं चाधिकृत्य वदति । ८ । पीवा दीक्षते । कृशो यजते । यदस्याङ्गानां मीयते जुहोत्येव तदिति विज्ञायते । ९ । यो ऽतपस्वी स्यादसंश्लिष्टो ऽस्य यज्ञः[1] स्यात् । तपस्वी स्यात् । यज्ञमेव तत्संश्लेषयत इति विज्ञायते । १० । एको द्वादशाहेन यजेत[2] । त्रयः षड् द्वादश त्रयोदश वा । ११ । तेषामुप[3]सत्सु त्रयोदशं दीक्षयन्ति[4] । १२ । तस्माद्द्वादशाहे त्रयोदशेन न ब्रह्मणा भवितव्यमित्येके । १३ । पञ्च-

---

१ All MSS. omit the Visarga. २ यजते DEQ. ३ तेषामेवोप॰ DES.
४ दीक्षेत DES. These MSS. insert the following sentence here: यज्ञमेव तत्संभरतीति [ संभवेदिति DE ] विज्ञायते.

द्वादशाह



दश दीक्षेरन्नर्धमासायतनाः । सप्तदश प्रजाकामाः पशुकामा वा । एकविंशतिं प्रतिष्ठाकामा रुक्कामा वा । त्रिंशतं मासायतनाः । त्रयस्त्रिंशतमोजस्कामा वीर्यकामा वा । चत्वारिंशतं यज्ञकामाः । चतुश्चत्वारिंशतमिन्द्रियकामाः । अष्टाचत्वारिंशतं पशुकामाः । १४ । अपरिमिता दीक्षेरन्नित्यन्ततो वदति । १५ । ये ऽन्ये सप्तदशभ्यो वादा अहीन एव ते स्थानिनः । १६ । सप्तदशानामेव [1]याथाकामी । १७ । सर्वे याजमाने स्थानिनः । १८ । सर्वे याजमानं कुर्युर्यत्किंचार्त्विज्येनाविबाधकम् । १९ । विबाधमान आर्त्विज्यं[2] बलीयः । २० ।

इति प्रथमा कण्डिका ।

सर्वे इष्टप्रथमयज्ञाः । अपि वा गृहपतिरेव । १ । गृहपतेरेव[3] परार्थानि[4] यथा यूपाञ्जनमृतुयाज्येति । २ । गृहपतेरेव सामिधेनीकल्पेनावदानकल्पेनेति[5] प्रक्रामेयुर्यानि चान्यान्येवंरूपाणि स्युः । ३ । त्वं वरुण इति वसिष्ठराजन्यानां परिधानीया । ४ । आजुहोतेतीतरेषां गोत्राणाम् । ५ । नाराशंसो द्वितीयः प्रयाजो

१ Thus PS only ; the other MSS. have यथा॰. २ ॰मानमार्त्विज्यं DE. ३ ॰पतिरेव QS. ४ परार्था Q. ५ Q omits इति.

वसिष्ठशुनकानाम् । ६ । तनूनपादितरेषां गोत्राणाम् । ७ । शिशिरे दीक्षन्ते वसन्त उत्तिष्ठन्ति[१] । ८ । शिशिरे वा एतस्य प्रयाणं[२] वसन्त उत्थानम् । ९ । ऋध्नोति य एवंविद्वाञ्छिशिरे दीक्षते वसन्त उत्तिष्ठत[३] इति विज्ञायते । १० । षड् व्युष्टाश्चैत्रस्यापूर्यमाणपक्षस्याथ[४] दीक्षेरन् । ११ । सावित्राणि होष्यमाणा निर्मथ्य संनिवपेरन् । ततो विनिवपेरन् । १२ । पञ्चपशुभिर्यक्ष्यमाणाः संनिवपेरन् । ततो विनिवपेरन् । १३ । दीक्षिष्यमाणाः संनिवपेरन् । १४ । तेषामेत[५]त्संन्युप्ता एवाग्नयो भवन्त्योदवसानीयायाः । १५ । अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति । तत उद्गातारम् । ततो होतारम् । १६ । ततस्तं प्रतिप्रस्थाता दीक्षयित्वार्धिनो दीक्षयति । १७ । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति । १८ । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति । १९ । ततस्तं प्रतिप्रस्थाता दीक्षयति । २० ।

इति द्वितीया कण्डिका ।

---

१ ०न्ते DE. २ Thus S only in accordance with Kâṭhaka 34. 9; प्रायणं PQ, प्रावणं O, प्राणं DE. ३ OPQ omit वसन्त उत्तिष्ठत. ४ ०पक्षस्य वा S. ५ तेषामेवैत० Q.

द्वादशाह



अन्यो वा ब्राह्मणः। १। दीक्षित आ तन्त्रीभावाद्देकैकमपवर्जयति। २। एवमनुपूर्वा एवैषां[1] याजमाना[2] धर्मा ये केचाविभविनः[3]। ३। नानागोत्रव्यवायाद्देव समानगोत्राणामार्षेयवरणमभ्यावर्ततेत्येकम्। व्यवेते ऽपि तन्त्रमेवेत्य[4]परम्। ४। सद्यो दीक्षामेके समामनन्ति। अन्वहं दीक्षामेके। ५। द्व्यहे दीक्षेत त्र्यहे दीक्षेतेत्येवं कामत्या[5] द्वादशाहात्। ६। [6]उपदीक्षमाणे सर्वं सदीक्षणीयमावर्ततेत्याश्मरथ्यः। ७। अग्नीनुपन्यु[7]प्यात्मसंस्कारेणैव प्रतिपद्येत[8] तन्त्रमाहुतयः स्युरित्यालेखनः। ८। पत्नीनामेव स्थाने पत्नीर्दीक्षयन्ति। ९। तासां [9]याजमानैरेव धर्मानुपूर्व्यं व्याख्यातम्। १०। अध्वर्युं दीक्षिता अन्वारभन्ते। दीक्षितान्पत्नयः। ११। अथ समन्वारब्धेषु गार्हपत्ये जुहोत्यपैतु मृत्युरमृतं न आगन्वैवस्वतो नो अभयं कृणोतु॥ पर्णं वनस्पतेरिवाभि नः शीयतां रयिः। सचतां नः शचीपतिः स्वाहेति। १२। कृते पत्नीभ्य इतरयोः। १३।

इति तृतीया कण्डिका।

---

१ एवैतेषां Q. २ यजमाना DEQ. ३ ॰विभाविनः DE, ॰विसादिनः P. ४ तन्त्रं स्यादित्य॰ DE. ५ ॰वमाक्रामत्या Q. ६ उपरि दी॰ DES. ७ ॰बुपसंन्यु॰ S. ८ ॰पद्यते DE. ९ Thus S only; the other MSS. have यज॰.

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरानिति दक्षिणाग्नौ । १ । इदमू नु श्रेयोऽवसानमागन्म यज्ञोजिद्धनजिदश्वजिद्यत् ॥ पर्णं वनस्पतेरिवाभि नः शीयतां रयिः। सचतां नः शचीपतिः स्वाहेत्याहवनीये। २। द्वादशाहं दीक्षिता भवन्ति। ३। न सनीहारान्प्रहिण्वन्ति सत्त्रे । ४। प्रायणीयया प्रचर्य राजानं क्रीत्वोपनह्य निदधाति द्वादशाहायातम् । ५। षोडशिवत्सोमक्रयणी। ६। उपसत्सु द्वादशाहे संभारयजूंषि व्याचष्टे। ७। यजमानं वाचयतीत्येके । ८। द्वादशोपसदः । ९ । चतुरहंचतुरहमेकैकेनोपसन्मन्त्रेण जुहोति । १० । [१]अनूपसदमग्निं चिनोति । ११ । द्यहंद्यहमेकैका चितिः । १२ । चतुरहमुत्तमा[२] । १३ । चतुस्तनं त्रिस्तनं द्विस्तनमेकस्तनमिति त्र्यहंत्र्यहं व्रतानि । १४ । य एषां व्रतमिच्छेदभिपूरयितुं[३] दध्न एकं स्रुवमुन्नीय नापरमुन्नयेत । १५ । एकविंशतिच्छदिः[४] सदः । १६ । संतृण्णे अधिषवणफलके भवतः । १७ । ऋजुरुपवसथः । १८ ।

इति चतुर्थी कण्डिका ।

१ अनुप० DEOQ. २ चतुर उत्तमा DES. ३ ०भिधारयितुं DES.
४ All MSS., except P, omit the Visarga.

द्वादशाह



श्वो भूते प्रतायते ज्योतिष्टोमः । १ । वैश्वानरः प्रायणीयो ऽतिरात्रः । २ । समानमा रात्र उपावहरणात् । ३ । यावन्तमेकस्मा अह्न आप्तं मन्यते । ४ । तमन्यस्मिन्वासस्युपनह्य प्रत्युपनह्येतरमुपावहरति । ५ । एवमहरहस्तन्त्रमग्नेर्योगविमोकौ । ६ । प्रथमे ऽहनि[1] युनक्ति । उत्तमे[2] विमुञ्चति । ७ । अन्वहमेके योगविमोकौ समामनन्ति । ८ । दक्षिणाकाले ऽन्वहं द्वादशानि शतानि ददात्यहीने । ९ । सत्त्रे तु[3] दाक्षिणौ होमौ[4] हुत्वेदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकाय दक्षिणां नयामीति यजमानाः कृष्णाजिनानि धून्वन्त[5] उदञ्चो दक्षिणापथेनातियन्ति । १० । एवमहरहः । ११ । उत्तम एवाहनि सत्त्राणि विसृजन्ते । १२ । कृष्णविषाणाश्च प्रविध्यन्ति । १३ । पूर्वस्मिन्नेवाहन्युत्तरस्मा अह्ने वसतीवरीर्यज्ञायज्ञियं प्रति गृह्णाति । १४ । वर्तमान एवातिरात्र[6] उत्तरस्मा अह्ने पयांसि विशास्ति । १५ । यत्र मैत्रावरुणस्याभिजानाति श्वःसुत्यामिन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः[7]

---

१ Q omits ऽहनि. २ DES add ऽहनि. ३ DE omit तु. ४ DE omit होमौ. ५ धुन्वन्त DE. ६ वर्तमानातिरात्र DES. ७ Corrected; सोमेभ्यः DES, सोमपेभ्यः twice P, omitted in OQ. Comp. Âśval. S'rautas. 6. 11. 16.

सोमपेभ्यः सोमं प्रब्रूतात्सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति ।१६।

इति पञ्चमी कण्डिका।

तदाग्नीध्र आग्नीध्रागारं प्रविश्य संप्रेष्यति श्वःसुत्यामिन्द्राग्निभ्यां विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः[१] सोमपेभ्यः[२] सोमं प्रब्रवीमि सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति।१। स वै खलु श्वःसुत्यामिति ब्रूयादि[३]त्याश्मरथ्यः। अद्यसुत्यामित्यालेखनः।२। तत ऊर्ध्वं श्वःसुत्यामित्येव ब्रूयात्।३। पत्नीसंयाजान्तमहः संतिष्ठते।४। संस्थिते ऽहनि ब्रह्मा वाचं विसृजते।५। परिहरन्ति पत्नीभ्य उदकम्।६। यन्ति समिद्धाराः।७। एत्याहवनीये ऽभ्यादधति[४]।८। एवमहरहः।९। तदानीमेव चिवृतमग्निष्टोमं रथंतरसामानमुपयन्ति।१०। रथशब्देन माहेन्द्रस्य स्तोत्रमुपाकरोति।११। [५]शब्दो मन्त्रस्थाने भवति।१२। श्वो भूते पञ्चदशमुक्थ्यं बृहत्सामानमुपयन्ति।१३। दुन्दुभिशब्देन माहेन्द्रस्य स्तोत्रमुपाकरोति।१४। यद्यु वै स्तनयित्नुः[६] स्यात्स एव

१ Corrected; सोमेभ्यः DES, omitted in the other MSS. २ DE omit सोमपेभ्यः. ३ ब्रूतामि॰ Q. ४ ऽभ्यादधाति Q. ५ Sûtras 12–14 are missing in OQ. ६ All MSS. omit the Visarga.

द्वादशाट्ट



स्याच्छब्दो मन्त्रस्थाने[1]। १५। श्वो भूते सप्तदशमुक्थ्यं वैरूपसामानमुपयन्ति। १६। बर्हिः[2]स्थान आधावेन माहेन्द्रस्य स्तोत्रमुपाकरोति। १७। उपाकृतं सामाप्रस्तुतं भवति। १८। अथोद्गाताधावेनाधूनुते। १९।

इति षष्ठी कण्डिका।

श्वो भूत एकविंशं षोडशिनं वैराजसामानमुपयन्ति।१। न्यूङ्खमेतदहर्भवति।२। बर्हिः[2]स्थाने ऽरणीभ्यां[3] माहेन्द्रस्य स्तोत्रमुपाकरोति।३। उपाकृतं सामाप्रस्तुतं भवति।४। अथोद्गातुर्दक्षिणमूरुमवकाभिः प्रच्छाद्य[4] तस्मिन्नग्निं मन्थति।५। तं जातमुद्गाताभिहिङ्कृत्य प्रस्तोत्रे प्रयच्छति। तं स्तो ऽध्वर्यवे।६। [5]तमध्वर्युरुत्तरेण धिष्णियान्पर्याहृत्याहवनीये प्रहृत्य[6] प्रेद्धो अग्ने दीदिहीति विराजाभिजुहोति।७। श्वो भूते त्रिणवमुक्थ्यं शाक्वरसामानमुपयन्ति।८। बर्हिः[7]स्थाने ऽद्भिरवकावास्ताभिर्मा[8]हेन्द्रस्य स्तोत्रमुपाकरोति।९। उपाकृतं सामाप्रस्तुतं भवति।१०। अथ तिस्रः सहर्षभा अग्रेण सदो ऽपरेणाग्नीध्रमुदीचीनं [9]दक्षिणापथेनाति-

१ DEOS add भवति.　२ All MSS. omit the Visarga.　३ ऽरणिभ्यां OP.
४ ०मूरुमपोच्छाद्य Q.　५ DES omit तम्.　६ प्रहरति DE.　७ All MSS. omit the Visarga.　८ ०वकास्ताभिर्मा० QS.　९ ०दीचौरद० OQ.

यन्ति। ११। श्वो भूते त्रयस्त्रिंशमुक्थ्यं रैवतसामान-मुपयन्ति। १२। न्यूङ्खमेतदहर्भवति। १३। स्वयमध्व-र्युर्ऋतुयाजं यजति। स्वयं गृहपतिः। १४। अध्वर्यू यजतं गृहपते यजेत्यभिज्ञायाध्वर्युर्हविर्धानं प्रविश्य[1] प्रैषोत्तरयर्चा यजति। ऋगुत्तरेण वा प्रैषेण। १५। अश्विना पिबतं सुतं दीद्यग्नी शुचिव्रता। ऋतुना यज्ञ-वाहसा॥ ऋतुना सोमं पिबतं वौषडिति यद्यव्यूढः। १६। व्यूढे त्ववार्श्वमद्य यय्यं नृवाहणं रथं युञ्जाथा-मिह वां विमोचनम्। पृङ्क्तं हवींषि मधुना हि कं गतमथा सोमं पिबतं वाजिनीवसू॥ ऋतुना सोमं पिबतं वौषडिति तस्य प्रचरितं मरुत्वतीयैर्भवति। १७।

इति सप्तमी कण्डिका।

---

अगृहीतो[2] माहेन्द्रः। १। अथ[3] प्रतिप्रस्थातोत्तरे-णाग्नीध्रमुदीचीं तन्तिं[4] वितत्य तस्यां वत्सान्बध्नाति। २। दक्षिणेन मार्जालीयं मातॄरुपरुन्धन्ति। ३। बर्हिः[5]-स्थाने ऽद्भिर्दूर्वावास्ताभिर्माहेन्द्रस्य स्तोत्रमुपाकरोति। ४। उपाकृतं सामाप्रस्तुतं भवति। ५। अथैतान्वत्सा-न्मातृभिः संसृज्य सांवाशिनं[6] कुर्वन्ति। ६। ता अग्रेण

---

१ गत्वा DES. २ आगृहीता DE. ३ ततः DES. ४ तन्त्रीं DE, तन्तिं Q, ततं O. ५ All MSS. omit the Visarga. ६ सांकाशिनं OS, सांवासिनं DE.

द्वादशाह



सदो ऽपरेणाग्नीध्रमुदीचीनं[1] दक्षिणापथेनातिविच्छयन्ति[2]।७। संतिष्ठते पृष्ठ्यः[3] षडहः।८। संस्थिते घृतं मधु वा प्राश्नन्ति।९। यथोहुषो वहं प्रत्यञ्ज्यात्ताहक्तदिति विज्ञायते।१०। ततस्त्रींश्छन्दोमानुकथ्यानन्वहमुपयन्ति। चतुर्विंशं चतुश्चत्वारिंशमष्टाचत्वारिंशमिति।११। रथंतरसामा प्रथमः। बृहद्रथंतरसामा द्वितीयः। बृहत्सामा तृतीयः।१२।

इत्यष्टमी कण्डिका।

ततो दशममहरविवाक्यमुपयन्ति। चतुर्विंशमग्निष्टोमं रथंतरसामानम्।१। नात्र कश्चन कस्मैचनोपहताय व्याहते।२। ये बाह्या दशीकवः[4] स्युस्ते विब्रूयुः।३। यदि तत्र न विन्देयुरन्तःसदसाद्व्युच्यम्।४। यदि तत्र न विन्देयुर्गृहपतिना व्युच्यम्।५। तद्व्युच्यमेवेत्यन्ततो वदति।६। अनुष्टुभा व्याहेति विज्ञायते।७। अनुष्टुभमुक्त्वाथ तद्ब्रूयात्।८। यस्मिन्नुपहतः[5] स्याद-

१ °दीचीर्द° Q, °दीचीरद° OP; comp. above 7. 11. २ °विछंति DE, °विक्र्यंति PS, °विलपन्ति Q; the root which is used here (विछ्, विच्छयति) is registered in the Dhâtupâṭha, but hitherto not met with in literature. ३ DEP omit the Visarga. ४ All MSS. omit the Visarga. ५ All MSS., except P, omit the Visarga.

नुष्टुभा वा एत[1]त्संपादयति। ९। द्वयोरेतदहः समिध आहरन्ति। नित्या औदुम्बरीश्च। १०। अभ्यादधति[2] नित्याः। ११। उत्तरेणाहवनीयमौदुम्बरीरु[3]पसादयन्ति। १२। अथ समन्वारब्धेषु द्वाभ्यां गार्हपत्ये जुहोति॥ अमूर्या उप सूर्ये याभिर्वा सूर्यः सह। ता नो हिन्वन्त्वध्वरम्॥ इह रतिरिह रन्तिरिह रमतिरिह रमध्वमिह वो रमतिः[4] स्वाहेति। १३। उपसृजन्धरुणमित्येताभ्यामथाहवनीयं गत्वा। १४। अतिच्छन्दसोपतिष्ठन्ते [5]ऽयं सहस्रमानवो[6] दृशः[7] कवीनां मतिर्ज्योतिर्विधर्म[8]। ब्रध्नः समीचीरुषसः समैरयत्[9]। अरेपसः समोकसः[10] सचेतसः सरेतसः[11] स्वसरे मन्युमन्तश्चिदा कोरि[12]ति। १५।

इति नवमी कण्डिका।

ततः प्राजापत्याय मनोग्रहाय संप्रसर्पन्ति। १। प्रस्तुतेषूपांशुपात्रेण गृह्णात्यनया त्वा पृथिव्या पात्रेण

१ नत् OPQ. २ ०दधाति DE. ३ ०म्बरीमु० PQS. ४ रति[:] OP; all MSS. omit the Visarga. ५ The following quotation is in a somewhat corrupt form taken from Atharvaveda 7. 22. 1, 2. ६ सहस्रमा नो Ath. ७ दृशं Q, दृशे Ath. ८ विधर्मणि Ath. ९ ०यन् Ath. १० Missing in Ath. and DE. ११ Missing in Ath. १२ मन्युमत्तमाश्चिते गोः Ath.

समुद्रं रसया प्रजापतये जुष्टं गृह्णामीति।२। आका-शाद्गृह्णीयादित्येकम्। तार्तीयसवनिकस्य सोमस्य परि-शाययेद्यावन्तमेकस्मै चमसगणाय सग्रहायाप्तं[1] मन्ये-तेत्यपरम्।३। मनसा स्तोत्रोपाकरणः प्रस्ताव उद्गीथः प्रतिहारश्च।४। मनसा तिसृणां सर्पराज्ञीनां षट्कृत्वः प्रतिगृणाति[2] यद्यर्धर्चशः शंसति। नवकृत्वो यदि पच्छः।५। होता चतुर्होतॄन्व्याचष्टे।६। ओमिति दशहोतुः प्रतिगरः। तथेति चतुर्होतुः। ओमिति पञ्चहोतुः। तथेति षड्ढोतुः। अरात्स्म होतरिति सप्तहोतुः।७। मनसा श्रुतप्रत्याश्रुते याज्या वषट्कारानुवषट्कारौ च[3]।८। मनसा हुत्वा हरति भक्षम्।९। ते यत्समीक्षन्ते स समुपहवः[4]।१०। मनसा भक्षयन्ति।११। ब्रह्म-वाद्यं वदन्तीति विज्ञायते।१२। विनिविश्य कथा स्यादित्येकम्। गृहपतिमेव महर्त्विजः पर्युपविश्य पृच्छेयुरित्यपरम्।१३। [5]तमध्वर्युः पृच्छति।१४।

इति दशमी कण्डिका।

यद्दशहोतारः सत्त्रमासत केन ते गृहपतिनार्ध्नु-वन्केन प्रजा असृजन्तेति।१। प्रजापतिना वै ते गृह-

१ DE (and S on the margin) add राजानं. २ ॰गृह्णाति OP, ॰गृह्णा-मीति Q. ३ DES omit च. ४ उपहवः DES. ५ Q omits तम्.

पतिनार्ध्नुवंस्तेन प्रजा असृजन्तेति प्रतिवचनः ।२।
ब्रह्मा पृच्छति यच्चतुर्होतारः सत्त्रमासत केन ते गृह-
पतिनार्ध्नुवन्केनौषधीरसृजन्तेति । ३। सोमेन वै ते
गृहपतिनार्ध्नुवंस्तेनौषधीरसृजन्तेति प्रतिवचनः ।४।
होता पृच्छति यत्पञ्चहोतारः सत्त्रमासत केन ते गृह-
पतिनार्ध्नुवन्केनैभ्यो लोकेभ्यो ऽसुरान्प्राणुदन्त केनैषां
पशूनवृञ्जतेति ।५। अग्निना वै ते गृहपतिनार्ध्नुवंस्ते-
नैभ्यो लोकेभ्यो ऽसुरान्प्राणुदन्त तेनैषां पशूनवृञ्जतेति
प्रतिवचनः ।६। होत्रकाः पृच्छन्ति यत्षड्ढोतारः सत्त्र-
मासत केन ते गृहपतिनार्ध्नुवन्केनर्तूनकल्पयन्तेति ।७।
धात्रा वै ते गृहपतिनार्ध्नुवंस्तेनर्तूनकल्पयन्तेति प्रति-
वचनः ।८। उद्गाता पृच्छति[1] यत्सप्तहोतारः सत्त्रमासत
केन ते गृहपतिनार्ध्नुवन्केन सुवरायन्केनेमांल्लोकान्स-
मतन्वन्निति । ९ । अर्यम्णा वै ते गृहपतिनार्ध्नुवंस्तेन
सुवरायंस्तेनेमांल्लोकान्समतन्वन्निति प्रतिवचनः ।१०।
अपि वा यदे[2]वैतत्तूष्णीकं[3] मानसं तस्यैष वादः ।११।
यदा होता चतुर्होतॄन्व्याचष्टे ।१२। प्रजापतिं परिवद-
न्तीति विज्ञायते ।१३।

इत्येकादशी कण्डिका ।

१ उद्गातार[:] पृच्छन्ति DE. २ यदे॰ DEPS. ३ ॰तूष्णीं DES.

द्वादशाह



अकुशलो वा अयं प्रजापतिर्यो दंशमशकान्ससृजे[1]
य[2] स्तेनानिति प्रजापतिपरिवादः।१। अपि वा प्रजा-
पतिपरिवादान्मन्त्रानधीयते।२। ते प्रत्येतव्याः॥ यद-
रण्यानि प्रजापतिः[3] पुरश्च ससृजे[4] गिरीन्[5]। कर्तानि[6]
च न तद्भद्रं यद्भद्रं तन्न[7] आसुव॥ यदूषा[8] तमसा युक्ता
दिने तेक्ष्णिष्ठमातपत्। अभ्रश्चात्य[9]ति[10]घर्मश्च तथा
तप्ते प्रजापतेः॥ [11]यत्स्तेनान्यद्वृकान्दंशान्मशकान्यदघा-
यवः। तदु ते वृजिनं त्वेतद्व्रतमेतन्न मे मतम्[12]॥ प्रजा-
पतिं दशममहर्भजध्वं मतिं कवीनामृषभं जनानाम्।
स सुष्टुतिं सुद्रविणं दधानः पूतो विपाप्मा विजहाति
लोक इति।३। अथ वरं वृणीते[13]ऽदो नोऽस्त्विति
यत्कामयते[14]। उत वै[15] ब्राह्मणो ऽनेक[16]कामो भवति
।४। भूर्भुवः सुवः सुप्रजाः प्रजया भूयासं सुवीरो वीरैः
सुवर्चा वर्चसा सुपोषः पोषैरित्येतद्विदधाति।५।
चतुर्होतॄन्व्याख्याय द्वारौ संवृत्य यथाधिष्ण्यं पत्नी-
र्व्यासाद्याथाभ्यो वाचमुपाकरोति।६। इह धृतिरिह

---

१ ०न्मृच सृजे DEQ. २ Thus S only; त्यद्य Q, द्य the other MSS. ३ ०पतेः OPQ. ४ Thus S only; all other MSS. have सद्दजो. ५ गिरः QS, रः only OP. ६ कर्तव्यानि Q, कीर्तन S. ७ तन्न PQ. ८ Thus all MSS. ९ ०प्य० DES. १० ०धि० OP. ११ य स्ते० DEOP. १२ ०द्रतं वे तन्वते मतिं OP. १३ वृणुते Q. १४ Thus S only; all other MSS. have ०यंते. १५ उतेव वै DES. १६ नैक० Q.

स्वधृति[1]रिह रन्तिरिह रमतिरित्यौदुम्बरीं परिषज्यो-
दरैरुपस्पृशन्तो[2] वाग्यतास्तिष्ठन्ति । ७ । अधिवृक्षसूर्ये
प्राञ्चः समन्वारब्धाः सर्पन्ति । ८ । युवं तमिन्द्रापर्वता
पुरोयुधा यो नः पृतन्यादप तंतमिद्धतं वज्रेण तंतमि-
द्धतम् । दूरे चत्ताय छन्त्सद्गहनं यदिनक्षत् । अस्माकं
शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वत इत्युत्तरेण
हविर्धानं दक्षिणैर्हस्तैः कटांस्तेजनीर्वा निषेवमाणाः
प्राञ्चो गत्वा पञ्च वचांसि व्याहरन्ति वाग्वागै[3]तु
वागुपैतु वाक् समैतूप मैतु वाग्भूर्भुवः सुवरिति । ९ ।
अह्ना रात्रिं ध्यात्वाधिवृक्षसूर्ये सुब्रह्मण्यया वाचं
विसृज्यौदुम्बरीः समिध आदधाति[4] । १० । संतिष्ठते
दशममहः । ११ ।

इति द्वादशी कण्डिका ।

प्रायणीयवदुदयनीयमुपयन्ति । १ । नात्राहीनसंत-
तयो भवन्ति । २ । यत्पूर्वस्मिन्नहन्युत्तरस्मा अह्ने क्रियते
ता अहीनसंततयः । ३ । सत्त्वं चेद्वपनकाले सशिखानि
वपन्ते[5] । ४ । उदवसानीययेष्ट्वान्यान्टत्विजो वृत्वा पृष्ठ-
शमनीयेन यजन्ते[6] ज्योतिष्टोमेनाग्निष्टोमेन सहस्र-

---

१ विधृति॰ OQ. २ ॰स्पृशंत्यो DES. ३ वाग् once only DE. ४ आद-
धति QS. ५ प्रवपन्ते Q. ६ यजेत S.

दक्षिणेन । ५ । अथ ग्रहक्लृप्तिः । ६ । प्रायणीयोदयनीययोर्दशमे ऽहन्निति पृश्निप्राणग्रहान्गृह्णाति । व्यतिषङ्गं सोममानैः । ७ । प्राकृतं यजुर्मानमनुद्रुत्य वायुरसि प्राणो नामेति दशभिः पृश्निग्रहाणां मन्त्रैर्दश मानानि मिमीते । ८ । उत्तरं यजुर्मानमनुद्रुत्यायं पुरो भुव इति दशभिः प्राणग्रहाणां मन्त्रैर्दश मानानि मिमीते । ९ । एवमुत्तराणि मानानि व्यतिषजति । १० । नवनवांशवो दश मन्त्राः । ११ । अपि वा नवभिर्नवभिर्मिमीते । १२ । अवशिष्टा विकल्पार्थाः । १३ । अपि वा मानमनुद्रुत्य पृश्नी अथ[1] प्राणेन निवपेत् । १४ । अथ प्राणं मानं पृश्निभ्यां[2] निवपेत् । १५ । अथ पृश्नी[3] प्राणं[4] मानेन निवपेत् । १६ । एवं विहितावुत्तरौ पर्यायौ । १७ । यः प्रथमः स चतुर्थः । यो द्वितीयः स पञ्चमः । १८ । नवनवांशून्गृह्णाति । १९ । उत्तरेषु त्रिषु पृष्ठ्याहःसु त्रीनतिग्राह्यान्गृह्णाति । २० । आग्नेयमेकविंश ऐन्द्रं त्रिणवे सौर्यं त्रयस्त्रिंशे पूर्वस्मिंस्त्र्यहे वाजसनेयिनः समामनन्ति । २१ । यत्र गौरिवीतं साम तद्वह्नतिग्राह्यान्गृह्णाति । २२ ।

इति त्रयोदशी कण्डिका ।

१ पृश्नि अथ P, पृश्न्यथ O, पृश्निरथ DES. २ पृश्नीभ्यां QS. ३ Thus S only; all other MSS. have पृश्नि. ४ प्राणौ DE.

त्र्यनीकां व्याख्यास्यामः । १ । ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः । २ । अथेतरेषां नवानामैन्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रम् । अथाग्रयणाग्रम् । ३ । एवंविहिता त्रिस्त्र्यनीका परिवर्तते[1] यद्यव्यूढः । ४ । व्यूढे त्वैन्द्रवायवाग्रौ प्रायणीयोदयनीयौ । अथेतरेषां दशानामै[2]न्द्रवायवाग्रं प्रथममहः । अथ शुक्राग्रम् । अथ द्वे आग्रयणाग्रे । अथैन्द्रवायवाग्रम् । अथ द्वे शुक्राग्रे । अथाग्रयणाग्रम् । अथ द्वे ऐन्द्रवायवाग्रे । ५ । अथ पशुकॢप्तिः । ६ । आग्नेयं प्रायणीय आलभन्ते । श्वो भूते सारस्वतीं मेषीम् । ७ । एवंविहि[3]तानैकादशिनानन्वहमालभन्ते । ८ । आग्नेयमुदयनीये । ऐन्द्राग्नं वा । ९ । सौर्यं ब्रह्मवर्चसकामः । १० । यदि यूपैकादशिनी स्यादन्वहमेकैकशो यूपान्संमिनुयात् । सर्वान्वौपवसथ्ये । ११ । अहरहरुपशय उपावर्तते[4] । १२ । अग्निष्ठ उदयनीये पशुमुपाकरोति । १३ । द्वादशाग्निष्टोमा रथंतरसामानः । १४ । स भरतद्वादशाहः । १५ ।

इति चतुर्दशी कण्डिका ।

---

१ परिवर्तयते DE. २ S inserts चक्राम्. ३ ०ह्० PQ. ४ ०मयो ऽभ्यावर्तते Q, ०मयो ऽभ्यावर्तत OP.

द्वादशाह गवामयन



गवामयनेन प्रजां भूतिं[1] भूमानं[2] गच्छन्त्यभि स्वर्गं लोकं जयन्त्येषु लोकेषु प्रतितिष्ठन्ति। १। तस्य द्वादशाहेन सत्त्रभूतेन कल्पो व्याख्यातः। २। सप्तदशैके दीक्षाः समामनन्ति। ३। संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नित्युक्तम्। ४। चतुरहे पुरस्तात्पौर्णमास्यै दीक्षेरन्। ५। माघ्या इत्याश्मरथ्यः। चैत्र्या इत्यालेखनः। ६। समानमा प्रायणीयात्। ७। प्रायणीयमतिरात्रमुपेत्य चतुर्विंशमुक्थ्यमारम्भणीयमुपयन्ति। ८। ते द्वे शये अहनी भवतः। ९। अथाभिप्लवं षडहमुपयन्ति ॥ ज्योतिषम[3]ग्निष्टोमं रथंतरसामानम्। गामुक्थ्यं बृहत्सामानम्। आयुष[4]मुक्थ्यं रथंतरसामानम्। गामुक्थ्यं बृहत्सामानम्। आयुष[4]मुक्थ्यं रथंतरसामानम्। ज्योतिषमग्निष्टोमं बृहत्सामानम्। १०। एवंविहितांश्चतुरोऽभिप्लवानुपयन्ति[5]। पृष्ठ्यं षडहं[6] समासे[7]। ११। एवं[8]विहितान्पञ्च मासानुपयन्ति। १२। ततः संभार्यम्। १३। त्रीनभिप्लवान्। पृष्ठ्यं षडहम्। अभिजितमग्निष्टोमम्। त्रीन्परःसाम्न उक्थ्यानग्निष्टोमान्वा। परे द्वे शये अहनी। १४। इति

१ Thus DE only; all other MSS. have प्रजापतिं instead of प्रजां भूतिं.
२ DE add प्रतिष्ठां. ३ ज्योतिष्टोमम॰ DE. ४ आयुष्य॰ Q. ५ ॰नुपेत्य DES.
६ S adds उपयन्ति. ७ समान OP. ८ S omits एवं.

षण्मासाः। १५। ततो विषुवन्तमुपयन्त्येकविंशमग्निष्टोमं दिवाकीर्त्यसामानम्। १६। तस्योदित आदित्ये प्रातरनुवाकमुपाकरोति। १७। दिवाकीर्त्यमेतदहर्भवति। १८। उत्तरे पक्ष आवृत्ता गणा अन्यच द्वादशाहीयाद्दशरात्रात्। १९। ततस्त्रीनर्वाक्साम्न उक्थ्यानुपयन्ति। अग्निष्टोमान्वा। २०। विश्वजितमग्निष्टोमम्। २१। तानि चत्वारि शयान्यहानि। २२। आवृत्तं पृष्ठ्यं षडहमुपेत्य चतुरोऽभिप्लवानावृत्तान्समासे[1]। २३। एवंविहितान्पञ्च मासानुपयन्ति। २४।

इति पञ्चदशी कण्डिका।

ततः संभार्यम्। १। द्वावभिप्लवौ। गोआयुषी। द्वादशाहस्य दशाहानि। पराणि चत्वारि शयान्यहानि। महाव्रतमतिरात्रश्च। २। इति द्वादश मासाः। ३। इति शाट्यायनकम्। ४। अथ ताण्डकम्। ५। उत्तरस्य पक्षस उपरिष्टाद्विश्वजित आवृत्तं पृष्ठ्यं षडहमुपेत्य त्रीनभिप्लवानावृत्तान्। ६। तानि सह पूर्वैरष्टाविंशतिः शयान्यहानि[2]। ७। आवृत्तं पृष्ठ्यं षडहमुपेत्य चतुरोऽभिप्लवानावृत्तान्समासे[3]। ८। एवंविहितांश्चतुरो मासानुपयन्ति। ९। ततः संभार्यौ। १०।

---

१ समान OP. २ Q omits अहानि. ३ समान OP.

गवामयन



त्रयो ऽभिप्लवा आयुर्गौर्दशाहस्य दशाहानि। ११। पराण्यष्टाविंशतिः श्यान्यहानि महाव्रतमतिरात्रश्च। १२। इति द्वादश मासाः। १३। इति ताण्डकम्। १४। अथ भाल्लविकम्[1]। १५। पूर्वस्य पक्षसः पुरस्तादुत्तमात्पृष्ठादभिजितमग्निष्टोमम्। १६। उत्तरस्य पक्षस उपरिष्टात्प्रथमात्पृष्ठाद्विश्वजितमग्निष्टोमम्। १७। समानमितरच्छाट्यायनकेन। १८। अपि वा संवत्सरं संपाद्योत्तमे मासि द्वादशाहीये दशरात्रे सकृत्पृष्ठान्युपेयुः। १९। तत्र पृष्ठानां स्थाने ऽभिप्लवा नि[2]धीयेरन्। २०। उपरिष्टाद्द्वादशाहीयाद्दशरात्रान्महाव्रतम्। २१।

इति षोडशी कण्डिका।

ततो महाव्रतमुपयन्ति पञ्चविंशमग्निष्टोमम्। १। अनु श्लोकेन स्तुवते। २। नवभिरैन्द्रीभिरप्रतिहृ[3]ताभिरध्वर्युरुद्गायति। न वा। ३। भद्रं साम पत्नय उपगायन्ति। ४। तस्य प्रचरितं मरुत्वतीयैर्भवति। ५। अगृहीतो माहेन्द्रः। ६। अथ[4] प्रतिप्रस्थाता महाव्रतिकानि शिल्पानि व्यायातयति। ७। औदुम्ब-

---

१ Thus Q only; भांलुकं DE, भाल्वकं S, पालवकं O, पाल्लवकं P.
२ Q omits नि.　　३ ०हृ० DES.　　४ ततः DES.

रस्य वीणादण्डस्य दशातिमथितानि। ८। एकैकस्मि-न्नतिमथिते दशदश मौञ्जांस्तन्तून्प्रवयति[1]। ९। स[2] वाणः[3] शततन्तुः। १०। अथैकेषाम्॥ भूस्त्रयस्त्रिंश-त्तन्तव इति त्रयस्त्रिंशतमध्वर्युः प्र[4]तनोति। भुवस्त्रय-स्त्रिंशत्तन्तव इति त्रयस्त्रिंशतं होता। सुवस्त्रयस्त्रिंश-त्तन्तव इति त्रयस्त्रिंशतमुद्गाता। गृहपतिरुत्तमम्। ११। औदुम्बरीमासन्दीमुद्गात्र उपनिदधाति मौञ्ज-विवानामध्यधि होतृषदने[5]। १२। औदुम्बरं प्रेङ्खं[6] होत्रे प्रबध्नाति मौञ्ज्या रज्ज्वा। १३। औदुम्बरे फलके अध्वर्यव उपनिदधाति। कूर्चौ वा। १४। कूर्चेषु होत्रका उपगातारः पत्नय[7] इत्यासते। १५। °निक-ल्पन्ते पत्नयो[8]ऽपाघाटलिका[9]स्तम्बल[10]वीणाः पिच्छोला इति[11]। १६। निकल्पन्ते वीणावादाः शङ्खाना[12]डी-स्तूणवानिति। १७। निकल्पेते ब्रह्मचारी पुंश्चली

---

१ प्रवयन्ति DES. २ DE omit स. ३ बाणः DEQ. ४ सं० DE. ५ °षदनम् DE. ६ प्रेङ्खं S. ७ Sic. ८ DES omit पत्नयो. ९ °काभिस् OPQ; comp. अपघाटिला Lâṭyâyana S'r. 4. 2. 7, 8, अवघटरिका S'ân-khâyana S'r. 17. 5. 12. १० तुम्बर° DE instead of तम्बल°; comp. अपाघाटलिका and तम्बलवीणा in the parallel passage XXI. 19. 3. ११ °वीणाभिः पिच्छोलाभिरिति OP; in Q there is a hiatus. १२ Corrected; the MSS. have शङ्खा ना°.

चाग्रेण सदसो[1] दक्षिणां द्वार्बाहुमार्तिष्यमाणौ[2]। १८। उत्तरस्यां वेदिश्रोण्यां पुंश्चल्यै मागधाय च परिश्रयन्ति। १९।

इति सप्तदशी कण्डिका।

दिक्षु[3] दुन्दुभीन्प्र[4]बध्नन्ति। स्रक्तिषु वा महावेदेः। १। अपरेणाग्नीध्रं भूमिदुन्दुभिम[5]वटं खनन्ति। अर्धमन्तर्वेद्यर्धं बहिर्वेदि। २। तमार्द्रेण चर्मणोत्तरलोम्नाभि[6]वितत्य शङ्कुभिः परिणिहत्याचैतत्पुच्छकाण्डमाहननार्थं निदधाति। ३। अग्रेणाग्नीध्रं शूद्रार्यौ निकल्पेते चर्मकर्तें व्यायंस्यमानौ। ४। उत्तरेणाग्नीध्रं कटसंघाते तेजन[7]संघाते वार्द्रं चर्म व्यधनार्थं वितत्योच्छ्रयन्ति[8]। ५। अग्रेणाहवनीयं रथेषु कवचिनः संनह्यन्ते। ६। मार्जालीयमन्यन्ते ऽष्टौ दासकुमार्य उदकुम्भैर्निकल्पन्ते। ७। वाग्भद्रं मनो भद्रं मानो भद्रं तन्नो भद्रमिति त्रिः पर्वयेत्[9]। ८। कटशलाकयेक्षुकाण्डेन वेणुकाण्डेन वेतसकाण्डेन वा वाणं[10] संह्राद्य तेन माहेन्द्रस्य

---

१ सदो DE. २ ०मास्तिष्यमाणौ S; comp. the parallel passage XXI. 19. 5. ३ दीचा Q. ४ ०प्रति० DES. ५ ०दुन्दुभिर० Q. ६ DES omit भि. ७ तेजनी० S, तेजिन० Q. ८ ०यति OQ. ९ Thus all MSS., except DE which have पर्ययेत्. १० बाणं DE.

स्तोत्रमुपाकरोति। ९। उद्गाता वादयतीति विज्ञायते। १०। तमुद्गाता प्रस्तोत्रे प्रयच्छति[1]। तं सो ऽध्वर्यवे। तमध्वर्युरन्यस्मै[2]। ११। तं सो ऽग्रेण सदसो[3] दक्षिणां[4] द्वार्बाहुं प्रतिवादयन्नास्ते। १२।

इत्यष्टादशी कण्डिका।

---

उपाकृते माहेन्द्रस्य स्तोत्रे सर्वा वाचो वदन्ति। १। उत्क्रोदं यजमानाः कुर्वते। २। अपाघाटलिकास्तम्बल[5]-वीणाः पिच्छोला इति पत्नयो वादयन्ति। ३। सं[6]प्रवदन्ति वीणावादाः[7] शङ्खा[8]न्नाडीस्तू[9]णवानिति[10]। ४। कृतीयेते ब्रह्मचारी पुंश्चली च दक्षिणां[11] द्वार्बाहुमाश्लिष्यमाणौ। ५। संवर्तेते पुंश्चली मागधश्च। ६। आजिं धावन्ति। ७। दुन्दुभीन्समाघ्नन्ति। पुच्छकाण्डेन भूमिदुन्दुभिम्। ८। शूद्रार्यौ चर्मकर्ते व्यायच्छेते आर्द्रे श्वेते परिमण्डले। अन्तर्वेदि ब्राह्मणो बहिर्वेदि शूद्रः। ९।

---

१ प्रयच्छेत् DES. २ DE add वीणावादाय. ३ सदो DE.
४ दक्षिणं DE; comp. above XI. 8. 5; XIV. 29. 1; XXI. 17. 18; 19. 5.
५ तुम्बर॰ DE instead of तम्बल॰; comp. XXI. 17. 16. ६ Q omits सं.
७ वीणाः OPQ. ८ Corrected; the MSS. have शंखा ना॰; comp. XXI 17. 17note. ९ ॰तू॰ OPQ instead of ॰सू॰. १० ॰वा इति DES; OPQ omit इति. ११ दक्षिणं DE; comp. note 8 above.

आक्रोशति शूद्रः। प्रशंसति ब्राह्मणः। १०। इमे ऽरात्सुरिमे सुभूतमक्रन्निति ब्राह्मणः। इम उद्वासीकारिण इमे दुर्भूतमक्रन्निति शूद्रः। ११। तं ब्राह्मणः संजित्या[1]ग्नीध्रे चर्माध्यस्यति। १२। [2]विपरियान्त्येतच्चर्म कवचिनः। १३। तेषामेकैकं सं[3]शास्ति मापरात्सीर्मातिव्यात्सीरिति। १४। तते[4] विद्धा[5] नातिपातयन्ति[6]। १५। राजपुत्रा विध्यन्तीत्येकेषाम्। १६। उदञ्चो ऽपरिमितमध्वानं यात्वा[7] प्रत्यायाय[8] विमुञ्चन्ति। १७। अथैता दासकुमार्य उदकुम्भानधिनिधाय त्रिः प्रदक्षिणं मार्जालीयं परिनृत्यन्ति दक्षिणान्पदो निघ्नन्तीरिदंमधुं गायन्त्यः। १८। इदमेव सारघं मध्वयं सोमः सुतो[9] इह। तस्येह पिब [10]तातृपुहैंमहा इदं मध्विदं मध्वित्येव गायेयुरित्याश्मरथ्यः। १९। अथालेखनः। २०।

इत्येकोनविंशी कण्डिका।

---

१ संविजित्या॰ Q. २ Corrected; all MSS. have विपर्यांत्ये॰. ३ Q omits सं. ४ Corrected; all MSS. have तत्ते. ५ विद्वा DEQS. ६ ॰पादयन्ति OPQ. ७ गत्वा DE, गात्वा S. ८ प्रजायाय Q. ९ Sic. १० Thus OP; तात्रिपुहैं॰ Q, तादयुहैं॰ DE, तात्त्वयुहैं॰ S.

हिल्लुकां[१] द्वे गायेताम्। हिम्बिनीं[२] द्वे। हस्तावारां द्वे। संवत्सरगाथां द्वे। १। वाग्वेद हिल्लुकां[१] सैनां गायतु प्राणस्य वादिते। सेमान्गीता यजमानानिहावतु॥ वाग्वेद हिम्बिनीं[२] सैनां गायतु प्राणस्य वादिते। सेमान्गीता यजमानानिहावतु॥ वाग्वेद हस्तावारां सैनां गायतु प्राणस्य वादिते। सेमान्गीता यजमानानिहावत्विति[३]। २। ततः संवत्सरगाथा॥ गाव एव सुरभयो गावो गुल्गु[४]लुगन्धयः। गावो घृतस्य मातरस्ता इह सन्तु भूयसीः॥ ननु गावो मङ्कीरस्य[५] गङ्गाया उदकं पपुः। पपुः सरस्वतीं नदीं प्राचीश्चोज्ज[६]गाहिरे॥ इमा वयं ह्नवामहे शम्याः प्रतरतामिव। निकीर्य तुभ्यं मध्य आकर्ष्ये[७] कर्ष्यो[८] यथा॥ यदा[९] भज्ञ्स्विनौ वदत ऋत[१०]पर्णक योऽवधीः[११]। आवि[१२]ष्कृतस्य दूषणमुभयोरक्षतस्य च॥ यदा[१३] राखाद्यौ[१४] वदतो ग्राम्य[१५]मङ्कीर[१६]दाशकौ।

---

१ हिलुकां Q. २ हिबिनीं S. ३ DES omit इति. ४ गुग्गु॰ S. ५ Corrected according to the reading which most of the MSS. exhibit below where this name occurs again. In this place OPS have मंकिरस्य, Q मंकरस्य; in DE there is a blank. Kâtyâyana S'r. 13. 3. 21 has मन्दीरस्य. ६ ॰स्वोज्जि॰ O only, in accordance with Kâty. S'r. ७ Sic! च्याकर्ष्यो DE. ८ कर्ष्यौ Q. ९ यथा OP. १० ऋतु॰ OP. ११ वधिः OP. १२ आदि॰ Q. १३ यथा DEOS. १४ Sic. राखाध्वौ Q. १५ ग्राम्यं S only. १६ Thus DEQS; ॰मंकिर॰ OP.

क्षेमे वृद्धे[१] ग्रामेणा[२]नड्वांस्तप्यते वहन्॥ इदं कल्माष्यो अपिबन्निदं सोमो अस्तूयत[३]। इदं हिरण्यैः[४] खीला[५] आवाय[६]न्साक्थि[७]भञ्जनम्[८] ।३। हैमहा इदं मधु हिल्लु ह्विलिल्वति[९] सर्वासामृगन्तेषु समयः ।४। अथैता दासकुमार्य उदकुम्भानुपनिनीय[१०] यथार्थं गच्छन्ति ।५। माहेन्द्रस्य स्तुतमनु घोषाः शाम्यन्ति।६। अर्कः पवित्रं रजसो विमानः पुनाति देवानां भुवनानि विश्वा। द्यावापृथिवी पयसा संविदाने घृतं दुहाते अमृतं प्रपीने॥ पवित्रमर्को रजसो विमानः पुनाति देवानां भुवनानि विश्वा। सुवर्ज्योतिर्यशो महदशीमहि गाधमुत प्रतिष्ठामिति फलके कूर्चौ वाधिरुह्याध्वर्युः शस्त्रं प्रतिगृणाति।७। संतिष्ठते महाव्रतम्।८।

इति विंशी कण्डिका।

व्याख्यात उदयनीयः पृष्ठशमनीयश्च ।१। अथ ग्रहक्लृप्तिः ।२। त्रिषु परःसामसु चीनतिग्राह्यान्गृ-

१ विवृद्धे OPQ. २ Thus S only; the other MSS. have ग्रामेना॰. ३ अपिबन्नयं सोमः स्तुतो इह DES; comp. XXI. 19. 18. ४ DEPS omit the Visarga. ५ खिल OP. ६ Thus OS; वायन् P, आयन् Q, अवयत् DE. ७ Thus DEQS; साच्चि॰ OP. ८ ॰जंभनं S. ९ ह्विल्विति DEOQS. १० ॰नधिनिधाय DES.

ह्लाति। ३। उपयामगृहीतो ऽस्यङ्गास्त्वौषधीभ्यो जुष्टं गृह्लामीति प्रथमे ऽहनि गृह्लाति। ओषधीभ्यस्त्वा प्रजाभ्य इति द्वितीये। प्रजाभ्यस्त्वा प्रजापतय इति तृतीये। ४। एतानेवावृत्तानर्वाक्सामसु। ५। तानूर्ध्वानावृत्तांश्च विषुवति। ६। तेषां मध्ये सौर्यमुदु त्यं जातवेदसमिति। ७। एतस्मिन्नेवाहनि वैश्वकर्मणमतिग्राह्याणामष्टमं गृह्लाति वाचस्पतिं विश्वकर्माणमूतय इति। ८। श्वो भूत आदित्यं महीमू षु मातरमिति। ९। तावे[1]वमेव व्यत्यासं गृह्लात्या महाव्रतात्। १०। तौ सह महाव्रते। प्राजापत्यं च[2] पञ्चपात्रम्। ११। त्रयस्त्रिंशतमेतदहरतिग्राह्यान्गृह्लाति। १२। दशाग्नेया[3] दशैन्द्रा[3] दश सौर्या[3] वैश्वकर्मण आदित्यः पञ्चपात्र इति त्रयस्त्रिंशत्। १३। अतिग्राह्यायतने चत्वार्यतिग्राह्यपात्राणि प्रतिदिशं निहितानि भवन्ति। मध्ये पञ्चमम्। १४। पूर्वार्धे गृह्लाति। १५। इन्द्रमिद्गाथिन इ[4]त्यनुद्रुत्योपयामगृहीतो ऽसीन्द्राय त्वार्कवते जुष्टं गृह्लामीति गृहीत्वैष ते योनिरिन्द्राय त्वार्कवत इति

---

१ ता ए० DES. २ DES omit च. ३ Corrected; all MSS. have the accusative ०न्. ४ ०थिनो बृहदि० Q.

गवामयन



सादयति। १६। एवं सर्वत्र ग्रहणसादनौ संनमति[1] ।१७। अभि त्वा शूर नोनुम इति दक्षिणार्धे।१८।

इत्येकविंशी कण्डिका।

इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः। यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु। आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करदिति पश्चार्धे ।१। त्वामिद्धि हवामह इत्युत्तरार्धे ।२। तदिदास भुवनेषु ज्येष्ठं यतो जज्ञ उग्रस्त्वेषनृम्णः। सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमा इति मध्यमे। ३। तानन्यस्मिन्पात्र आनीय सर्वान्मध्यमे गृह्णाति त्वे क्रतुमपि वृञ्जन्ति विश्व इति। ४। अथैकेषाम्। यन्नाना जुहुयादात्मनो ऽङ्गानि विच्छिन्द्यात्। यत्समाहृत्याहुतीः[2] संरुन्ध्यात्तदनु यजमानाः संरुन्ध्येरन्। स्तोका एवात्मन्प्रत्यानीय होतव्याः। प्रत्यह्रा[3]ऽङ्गानि ददाति[4] नाहुतीः संरुणद्धि न यज्ञं विच्छिनत्तीति विज्ञायते। ५। तं भक्षयति[5] महस्ते भक्षयामि भर्गं[6] ते भक्षयामि भुजं ते भक्षयाम्य-

१ Kaṇḍikâ 21 ends here in OPQ. २ ०ऊतिः DEOP. ३ Corrected reading of S only; प्रत्याहा० DE and original reading of S, प्रत्यहो OPQ. ४ निदधाति DES. ५ ०यन्ति DEQ. ६ भर्भं DEQS.

न्नाद्यं ते भक्षयामीति। ६। अनीकां व्याख्यास्यामः। ७। ऐन्द्रवायवाग्रं प्रथममहरथ शुक्राग्रमथाग्रयणाग्रम्। ८। एवंविहिता व्यनीका परिवर्तत इत[1] ऊर्ध्वा प्राग्विषुवतः। ९। ऊर्ध्वं विषुवत आवृत्ता[2]स्तेषु। १०। शुक्राग्रो विषुवान्। ११। अथ पशुकॢप्तिः। १२। आग्नेयं प्रायणीय आलभन्ते। श्वो भूते सारस्वतीं मेषीम्। १३। एवंविहितानैकादशिनान्वहमालभन्ते। १४।

इति द्वाविंशी कण्डिका।

सौर्यं विषुवत्युपालम्भ्यम्[3]। १। तेषामेवमुपाकुर्वतां द्वादशाहीयस्य दशरात्रस्य सप्तदश उक्थ्ये द्वात्रिंश-तमे[4]कादशिन्यो ऽपवृज्यन्ते। २। नवाहान्यतिरिच्यन्ते। ३। तेषु गव्यानतिरिक्तपशूनालभन्ते। वैष्णवं वामन-मेकविंशे। ऐन्द्राग्नं त्रिणवे। वैश्वदेवं त्रयस्त्रिंशे। द्यावापृथिव्यां[5] धेनुं प्रथमे छन्दोमे। तस्या एव वायव्यं वत्सं मध्यमे। आदित्यामविं वशामुत्तमे। मैत्रावरुणी-मविवाक्ये। प्राजापत्यमृषभं तूपरं महाव्रते। आग्ने-

---

१ OQ omit इत; DE have इति. २ ०त्त आद० Q, ०त्ता आद० OP. ३ All MSS., except P, have ०लभ्यं. ४ द्वात्रिंश ए० Q. ५ ०थिवीयां DE.

गवामयन / उत्सर्गिणाम् अयनम्



यमुदयनीये। ४। इति [१]पालिङ्गायनिकाः। ५। अथ काठकाः। ६। ऐकादशिनान्प्रतिविभज्याप्रतिविभज्य वा प्रायणीयोदयनीययोरालभन्ते। ७। आग्नेयमन्तर्धौ[२] रथंतरपृष्ठेष्वैन्द्रं बृहत्पृष्ठेषु। ८। अपि वाग्नेन्द्रं[३] रथंतरपृष्ठेष्वैन्द्राग्नं बृहत्पृष्ठेषु। ९। तेष्वेव नवसु गव्यान्। १०। तत्र विकारः। ११। बार्हस्पत्यं शितिपृष्ठं त्रयस्त्रिंशे। वाचे पृश्निमुत्तमे। वैश्वकर्मणमृषभं तूपरं महाव्रते द्विरूपमुभयतएतम्[४]। १२। क्रतुपशूनेव समभ्युच्चयवद[५]न्वहमालभेरन्यदि विभवः पशवः स्युः। ऐकादशिनान्वा विहृतानिति वाजसनेयकम्। १३। ऐन्द्राग्नं वा सर्वत्र। १४।

इति त्रयोविंशी कण्डिका।

उत्सर्गिणामयनं गवामयनं गुणविकृतम्। १। उत्सृज्यां३ नोत्सृज्या३मित्युक्तम्। २। यद्यहान्युत्सृजेयुः प्रथमं पृष्ठ्यं[६] संस्थाप्यापरस्मा अह्ने वसतीवरीः परिहृत्य वसतीवरीषु मृत्पिण्डमवधायैन्द्रं सांनाय्यं

---

१ पा॰ S. २ DE add वा. ३ वाग्नेयं DES. ४ Thus OS only; all other MSS. have ॰यत एवं. ५ समुच्चयवद॰ DES. ६ पृष्ठं OPQ.

निरुप्योपवसन्ति[१]। ३। श्वो भूते ऽहरुत्सृज्य प्राजापत्यं पशुमालभन्ते। ४। तस्य यथाकालं वपया प्रचर्याग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपत्यैन्द्रं च दधि। ५। तयोः समानं[२] स्विष्टकृदिडम्। ६। उपहूतायामिडायां सांनाय्यं समुपहूय भक्षयन्ति। ७। माध्यंदिनकाले पशुपुरोडाशेन प्रचर्यैन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपत्यैन्द्रं च[३] चरुम्। ८। हविराहुतिप्रभृतीडान्तं संस्थाप्य तृतीयसवनकाले पशुना प्रचर्य वैश्वदेवं द्वादशकपालं निर्वपति[४] वैश्वदेवं च[५] चरुम्। ९। पूर्ववद्धविषी संस्थापयेत्। १०। अपि वा सवनीयानेव पुरोडाशानेतेषां हविषां[६] स्थाने। अध्वरकल्पान्वा। ११। आग्नीध्रौपयजानङ्गारानाहरेत्येतदादि पाशुकं कर्म प्रतिपद्यते। १२।

इति चतुर्विंशी कण्डिका।

एवमत ऊर्ध्वं षडहैर्मासान्संपाद्य सप्तममुत्सृज्यैतत्कुर्वन्ति। १। पञ्च ज्योतींषि प्राग्विषुवत उत्सृ-

---

१ ॰वसति DES. २ Q adds च, OP तु. ३ All MSS., except S, omit च. ४ निर्वपन्ति QS. ५ DEOQ omit च. ६ S omits हविषां.

उत्सर्गिणाम् अयनम्



ज्यन्ते । २ । चत्वारस्त्रयस्त्रिंशा उ[1]परिष्टादेकं च ज्योतिः संभार्यं । ३ । प्रथमसप्तमयोरेव नोत्सृजेयुरित्येके । ४ । अथैकेषाम् । यान्यहान्युत्सर्गप्राप्तान्येकचिक[2]स्तोत्राण्येव[3] स्युः । ५ । एकैकां वैषां[4] स्तोत्रीयामुत्सृजेयुः । उक्थानि[5] वा । ६ । संवत्सरस्योत्तमे[6]ऽहन्[7]येकामेव स्तोत्रीयामुत्सृजेयुः । तदुत्सृष्टं चानुत्सृष्टं च भवतीति[8] । ७ । अथैकेषाम् । यद[9]हरुत्सृजेयुस्तदेव श्वो भूत उपेयुः । ८ । तदु तथा न कुर्यात् । विकस्तिः सा[10] संवत्सरस्य[11] भवतीति[12] । ९ । अवभृथादुदेत्य तान्येवोपेयुः । १० । द्वादश यद्यमावास्यायामुत्सृजेयुः । यद्युभयच चतुर्विंशतिः । ११ । तदेतत्पौ[13]त्रीयं पशव्यमायुष्यं स्वर्ग्यम् । १२ । संतिष्ठत उत्सर्गिणामयनमुत्सर्गिणामयनम् । १३ ।

इति पञ्चविंशी कण्डिका ।

इत्येकविंशः प्रश्नः ॥

---

१ ॰ष्टादु॰ Q, ॰ष्टो॰ OP. २ DE omit चिक, O has चिंम instead. ३ DES have अहानि instead of एव. ४ DES omit वैषां. ५ उक्थ्यानि DEO. ६ ॰रस्य वोत्तमे DES. ७ ऽहन्ये॰ DEPS. ८ DES omit इति. ९ यद्यद॰ Q, यद्य॰ OP. १० DEQ omit सा, O has हि instead; comp. Taitt. S. 5. 4. 7. 7. ११ सांवत्सरिकस्य DE. १२ DES omit इति. १३ ॰त्पो॰ DE.

# ओम् ॥

एकाहेष्वहीनेष्विति प्राकृतीर्दक्षिणा ददाति । यथा-समाम्नातं वा ।१। सर्वक्रतूनां प्रकृतिरग्निष्टोमः । निकायिनां तु प्रथमः सर्वत्र । यथादिष्टं वा ।२। ज्योतिर्गौरायुरिति त्रिकद्रुकाः ।३। प्रथमो ऽग्निष्टोम उक्थ्या वा सर्वे ।४। ज्योतिषि सहस्रं ददातीति ।५। श्यैतनियमाद्बृहत्पृष्ठः ।५। गौर्भ्रातृव्यतः । आयुः स्वर्गकामस्य । अग्निष्टोमस्तु भ्रातृव्यतः । विश्वजिदग्निष्टोमः श्रैष्ठ्यकामस्य ।६। सहस्रं दक्षिणा[1] सर्ववेदसं वा यावतीर्वा क्रतोः स्तोत्रीयाः ।७। सर्ववेदसे ज्येष्ठं पुत्रमपभज्य संविदो[2] विपरियाचेत[3] ।८। [4]यद्दक्षिणाकाले सर्वस्वं [5]तद्दद्याद्यदन्यद्भूमेः पुरुषेभ्यश्च ।९। उत्तमां दक्षिणां नीत्वोदवसाय वा दक्षिणेनौदुम्बरीं प्राङ्निषद्य ब्रूयाद्यन्मे ऽद ऋणं यददस्तत्सर्वं ददामीति ।१०। उदवसाय रोहिणीं वत्सच्छवीमिति समानम् ।११। इन्द्रस्याभिजिदग्निष्टोमो ऽनभिजितस्याभि-

---

१ दक्षिणाः QT. २ संविदा DES. ३ All MSS. read विपर्याचेत, except S which has विपरिर्याचेत. ४ DE omit यद्. ५ DE omit तद्.

जित्यै। १२। उभे बृहद्रथंतरे भवतः परोऽक्षपृष्ठो[1] वा। १३। बृहत्तु होतुः पशवश्चैकादशैकयूपे। १४। सहस्रं दक्षिणा वराणां वा द्वादशं शतम्। १५। सर्वजिताग्निष्टोमेन सर्वमाप्नोति सर्वं जयति। १६।

इति प्रथमा कण्डिका।

अन्नादश्च भवति। १। तस्य महाव्रतं पृष्ठ्य[2]मर्क्यं शस्यते। २। सहस्रं दक्षिणा विंशतिर्वाष्टाविंशतीनाम्[3]। ३। चत्वारः साहस्राः[4]। ४। ज्योतिरग्निष्टोमो[5] रथंतरसामा प्रथमः। प्राणेष्वन्नाद्ये च प्रतितिष्ठति॥ गौरुक्थ्यो बृहत्सामा द्वितीयः। पशुषु प्रतितिष्ठति॥ सर्वज्योतिरग्निष्टोम उभयसामा तृतीयः। सर्वमाप्नोति सर्वं जयति॥ चिरात्र[6]संमितो ऽग्निष्टोमो बृहत्सामा चतुर्थः। त्रिरात्रस्य फलमाप्नोति। ५। चत्वारः साद्यस्क्राः। ६। तेषां विशेषः। ७। रथंतरसामा बृहत्सामोभयसामा वा प्रथमः। ८। तस्मिन्कामाः[7] स्पर्धायां भ्रातृव्यतिस्तीर्षा स्वर्गः पशवो वा। ९। तेषां पूर्वेद्यु-

---

१ ०पृष्ठे DE. २ पृष्ठ० PTU. ३ ०विंशतानां PQTU. ४ सहस्राः DEPST. ५ ज्योतिष्टोमो ऽग्निष्टोमो ST. ६ चिराचि० DES. ७ All MSS. omit the Visarga.

राग्नेयः सौम्यो बार्हस्पत्यश्च पशवः। १०। तेषामेकादशिन्यां रूपाणि। ११। तदलाभ एतासां देवतानामष्टाकपालः प्रथमश्चरू चेतरौ। १२। धारयत्याहवनीयम् । १३। व्याघारयत्युत्तरवेदिम् । १४। सर्पिष्मदशनम्। १५। हिरण्यं मुखे न्यस्या[1]न्तरोरू प्रियायै भार्यायै ब्रह्मचारी शेते स्व इष्ट्वा पशुना वा यक्ष्य इति। १६। ऋत्विजः समोढाः[2]। १७। तान्ययालोकं विनिधाय[3] सर्वा दिशः सक्षीरदृतयो ऽश्वरथाः सोमप्रवाका विधावन्ति। १८। तेभ्यो यन्नवनीतमुदियात्तदाज्ये ऽवनयेत्। १९। चतुर्युजा योजने प्राच्यां दिशि। त्रियुजोत्तरतस्त्रिक्रोशे। द्वियुजा पश्चाद्द्विक्रोशे। दक्षिणैकयुक्तेन क्रोशे। २०। अश्वतरीरथो वैकः। २१। प्रदक्षिणं पूर्वेणोत्सर्गः। २२। योजनादीनि वाद्विक्रोशानि। २३। अश्वरथेन दक्षिणोत्सर्गः। २४। त्रिवत्सः साण्डः सोमक्रयणः। २५।

इति द्वितीया कण्डिका।

---

१ न्यास्या॰ DET, न्यस्या॰U, स्या॰ Q, न्तरस्या॰ S.  २ संमूढाः (!) DE.
३ निधाय QS.

उदित आदित्ये दीक्षिते[1] प्रागस्तमयादवभृथः ।१। उपसत्सु त्रिः संमीलेत् । संमील्य वा प्रचरेत् । अपि वा नापराह्णिक्य उपसदः ।२। यवोर्वरा वेदिः ।३। यवानां खल उत्तरवेदिः ।४। आरोहणे हविर्धाने ।५। विमितं सदः ।६। स्फ्यो यूपः स्फ्याग्रो वा खलेवाली लाङ्गलेषा वा[2] ।७। कलापि चषालम् ।८। अग्नीषोमीयकाल[3] ईजानस्य गृहाद्वसतीवरीर्गृह्णीयात् ।९। सवनीयकाले सह पशूनालभते ऽग्नीषोमीयं सवनीयमनूबन्ध्यां च ।१०। अग्नीषोमीयस्य स्थाने ऽग्नीषोमीय एकादशकपालः । अनूबन्ध्यास्थाने[4] मैत्रावरुण्यामिक्षा ।११। तस्या दक्षिणाकाले सदश्वः श्वेतो दक्षिणा ।१२। तमाङ्गिरसाय भ्रातृव्याय[5] वा दद्यात् ।१३। द्वेष्यं वा[6] ब्राह्मणं हत्वा तस्मा अश्वं रुक्मप्रतिमुक्तं दद्यात् ।१४। तदलाभे गौः[7] श्वेतः[8] ।१५। संवत्सरमुपरिष्टात्पादावनेजनं मांसं स्त्रियमनृतमुपरिशय्यामाञ्जनाभ्यञ्जने च वर्जयेत् ।१६। सा दीक्षा ।१७। यदि संवत्सरं न शक्नुयाद्द्वादशाहम् ।१८।

इति तृतीया कण्डिका ।

१ Kaṇḍikâ 2 ends here in PQTU. २ DES omit वा. ३ ०मीयस्य काल DES. ४ ०न्ध्याया स्थाने PT. ५ ब्राह्मणाय instead of भ्रा० S. ६ च DE. ७ All MSS. omit the Visarga. ८ गां श्वेतं S, गां श्वेतां DE.

27

एतेनोत्तरे व्याख्याताः। १। द्वितीयस्य पञ्चदश-मग्निष्टोमसाम कृत्वामयाविनमन्नाद्यकामं प्रजाकामं पशुकामं वा याजयेत्। २। हीनानुजावरो ऽनुक्रिया। ३। तस्याष्टादशावुत्तरौ पवमानौ। ४। अश्वसादः सोमप्रवाको दधिदृतिश्च चिक्रोशे ऽन्ततः प्राह। ५। स्त्रीगौः सोमक्रयणी। ६। प्रक्ष्णुताग्रो यूपः। ७। व्रीह्युर्वरा वेदिः। ८। व्रीहीणां खल उत्तरवेदिः। ९। भारद्वाजो होता। १०। विश्वजिच्छिल्पश्चतुर्थः सर्व-पृष्ठः सर्वस्तोमः सर्ववेदसदक्षिणः। ११। सर्वस्यान्ना-द्यस्य[1] प्रसवं गच्छति। १२। श्येनेनाभिचरन्यजेत। १३। रथौ हविर्धाने। १४। तैल्वको बाधको वा स्फ्याग्रो यूपः। १५। शवनभ्ये अधिषवणफलके भवतः। १६। अग्नये रुद्रवते लोहितः[2] पशुः। १७। स्रादयन्त्यु[3]पांश्वन्तर्यामौ। १८। शरमयं बर्हिः। १९। औद्भवः[4] प्रस्तरः। २०। वैभीतक इध्मः। २१। बाण-वन्तः परिधयः। २२। लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति। २३। नवनव दक्षिणाः कूटाः कर्णाः[5] काणाः खण्डा बण्डाः। २४। ता

१ सर्वस्यान्नस्य DE. २ रोहितः DES. ३ स्रादयन्त्यु॰ DESU. ४ औद्भव्दः QT. ५ DES omit the Visarga.

दक्षिणाकाले कण्टकैर्वितुदेयुः । २५ । इच्छन्हन्येतेति [1]रथंतरं पवमाने कुर्याद्बृहत्पृष्ठम् । जीयेतेत्येतद्विपरीतम् । २६ । परां[2] परावतं गच्छेन्न प्रतितिष्ठेदिति पूर्ववत्सर्वं च ब्रह्मसाम कुर्यात् । २७ । प्रजापतेरेकत्रिको ऽग्निष्टोमः सर्वस्य पाप्मनो निर्दिश्य[3] गच्छति । २८ । चतुर्विंशतिं गा[4] दक्षिणा ददाति । २९ ।

इति चतुर्थी कण्डिका ।

त्रयो वाचः[5] स्तोमाः । १ । पूर्वाव[6]ग्निष्टोमौ रथंतरसामानौ । सर्वस्तोमो ऽतिरात्र उत्तरः । २ । तस्मिन्सर्वा ऋचः सर्वाणि सामानि सर्वाणि यजूंषि प्रयुज्यन्ते । ३ । व्रात्यानां प्रवासे व्रात्यस्तोमा उक्थ्या रथंतरसामानः । द्वितीयो वाग्निष्टोमः । ४ । उष्णीषं[7] प्रतोदो[8] ज्याह्रोडो रथो विपथः[9] फलकास्तीर्णो ऽश्वो ऽश्वतरश्च युग्यौ कृष्णशं वासः कृष्णवलक्षे अजिने रजतो[10] निष्कः । ५ । तद्गृहपतेः । ६ । वलूकान्तानि दामतूषाणीतरेषाम् । ७ । द्वेद्वे दामनी भवतः । द्वेद्वे उपानहौ । ८ । द्विषं-

१ DES add कण्व. २ DES omit परां. ३ निर्दिश्यं PQU. ४ Thus P only; all other MSS. have •विंशतिर्गा. ५ All MSS. omit the Visarga. ६ पूर्वबद•DE. ७ उष्णीष PQTU. ८ All MSS., except S, add यूपो. ९ विपथो रथः DES. १० राजतो DES.

हितान्यजिनानि। ९। त्रयस्त्रिंशता त्रयस्त्रिंशता गृह-पतिमभि समायन्ति। १०। ता दक्षिणा भवन्ति। ११। अपि वा षट्षष्टिं गा[1] वन्वीरन्[2]। १२। अथो खल्वा-हुर्यद्वैषां सातं[3] स्यात्तद्द्युस्तद्धि व्रात्यधनमिति। १३। षट्षोडशी निन्दितानाम्। द्विषोडशी कनिष्ठानाम्[4]। ऊर्ध्वस्तोमो ज्येष्ठानाम्। चतुःषोडशी सर्वेषाम्। १४। आदित्यानां प्रयतिरुक्थ्यो नाकसदां प्रथमः। १५। व्यावृत्तिं पाप्मना भ्रातृव्येण गच्छन्ति[5]। १६। अग्नि-ष्टोमा इतरे। अङ्गिरसां द्वितीयः। साध्यानां तृतीयः। मरुतां चतुर्थेनौजो वीर्यमाप्नोति। त्रयस्त्रिंशः पञ्चमः। १७। स्वर्गकामो ऽभिभुवा[6] भ्रातृव्यमभिभवति। विनुत्त्या भ्रातृव्यं विनुदते। १८।

इति पञ्चमी कण्डिका।

चितिस्तोमः प्रजननकामः। १। गायत्रेणाग्निष्टोमेन रथंतरसाम्ना ब्राह्मणो ब्रह्मवर्चसकामः। २। गायत्रावग्नि-ष्टोमौ प्रथमयज्ञौ। ३। प्रथमेन ब्राह्मणस्य तेजो ब्रह्म-वर्चसम्। द्वितीयेन क्षत्रियस्य राष्ट्रमुग्रमव्यथ्यम्। न तु

1 Corrected; the MSS. have षट्षष्टिर्गा (cf. XXII. 4. 29). 2 वुन्वीरन् QT; DEP are totally corrupt. 3 संदितं DE. 4 कनिष्ठि-कानां DE. 5 गच्छति DES. 6 स्वर्गकामाभिभवा DES.

बहुपशू इव भवतः । ४ । त्रिवृताग्निष्टुता[1]ग्निष्टोमेनापूतो यजेत । ५ । आग्नेय्यः पुरोरुचः । आग्नेयी सुब्रह्मण्या । ६ । आग्नेयीषु स्तुवते ऽजा हिरण्यं च दक्षिणा । ७ । एतमेव चतुष्टोमं कृत्वा श्रोत्रियो ऽक्षहतः स्त्रीहतः कामहतश्चरणहतो वा यजेत । ८ । अश्वः[2] श्यावो दक्षिणा । स ब्रह्मणे देयः । ९ । एतस्यैव वायव्यासु[3] पञ्चदशम[4]ग्निष्टोमसाम कृत्वामयाविनमन्नाद्यकामं प्रजाकामं पशुकामं वा याजयेत् । एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा[5] ब्रह्मवर्चसकामम् । एतमेव चतुष्टोमं कृत्वा ग्रामकामम् । १० । अप्रवर्ग्या भवन्तीत्येके । ११ । त्रिवृतान्नाद्यकामः । १२ । पञ्चदशेन वीर्यकामः । १३ । सप्तदशेनाग्निष्टुताग्निष्टोमेन यज्ञविभ्रष्टो यजेत यस्मिन्वा क्रतौ विभ्रंशेत । १४ । त्रिवृद्वाद्यं वदतः । १५ । पञ्चदशो निहत्यस्य[6] निरुक्तः[7] । १६ । सप्तदशो ऽनाश्यान्नस्य भोजने । १७ । एकविंशो जनं यतो[8]

---

१ QT omit अग्निष्टुता. २ All MSS. omit the Visarga. ३ DES add चतु. ४ DE add एकविंशम्, S has एकविंशम् instead of पञ्चदशम्. ५ DEQS add पशुकामं. ६ Thus DES; निरस्यस्य Q, निहात्यस्य PTU. ७ निरुत्यः PQTU. ८ Comp. IX. 11. 4; जनयंतो DE, जनयतो S.

गन्धारिकलिङ्गमगधा[1]न्पारस्करा[2]न्सौवीरान्वा । १८ । त्रिणव ओजस्कामः । १९ । त्रयस्त्रिंशः[3] स्वर्गकामः । अपि वा ज्योतिष्टोम एव । २० । अग्निष्टोमे सर्वान्कामान्कामयेत[4] । २१ ।

इति षष्ठी कण्डिका ।

---

चत्वारस्त्रिवृतो ऽग्निष्टोमा रथंतरसामानः । १ । तेषां प्रथमेनानिरुक्तेन ग्रामकामो[5] यजेत । २ । निरुक्तं[6] प्रातःसवनमित्येके । ३ । अश्वः श्वेतो दक्षिणा । स ब्रह्मणे देयः । ४ । बृहस्पतिसवो द्वितीयः । ५ । ब्राह्मणो ब्रह्मवर्चसकामः पुरोधाकामो वा यजेत यं वा स्थापत्यायाभिषिञ्चेयुः । ६ । परिस्रजी होता भवत्यरुणो मिर्मिरस्त्रिशुक्रः । ७ । बृहस्पते जुषस्व न इति बार्हस्पत्यमतिग्राह्यं गृह्णाति । ८ । बार्हस्पत्यः पशुरुपालम्भ्यः । ९ । प्रातःसवने सन्नेषु नाराशंसेष्वेकादश दक्षिणा व्यादिशति । १० । आज्येन माध्यंदिने सवने

---

१ °कलिंगानारट्टान् U, °कलिंगानारट्टवान् QT (perhaps the Ânartas are intended, on account of Pâraskara which is name of a town in the country of the Ânartas, according to commentary, on Gaṇaratnamahodadhi 2. 150). २ करस्करान् PQU (comp. Gaṇaratnam. l.c.). ३ त्रयस्त्रिंशत् QT. ४ कामयेत् DES. ५ °क्तेनान्नाद्यकामो DES. ६ अनिरुक्तं DES.

कृष्णाजिन आसीनमभिषिञ्चति शुक्रामन्थिनोर्वा संस्रावेण बृहस्पते युवमिन्द्रश्च वस्वो दिव्यस्येशाथे उत पार्थिवस्य। धत्तं रयिं स्तुवते कीरये चिद्यूयं पात स्वस्तिभिः सदा न इति। ११। अश्वद्वादशा माध्यंदिने। एकादश तृतीयसवने। १२। ता उभयीरुपाकरोति। १३। अपि वाष्टौ प्रातःसवन एकादश माध्यंदिने द्वादश तृतीयसवने। सर्वा[1] वा माध्यंदिने। १४। अश्वं तृतीयशो ऽनुसवनं नयन्ति। १५। अपि वा मनसेतरयोः सवनयोर्ध्यायेत्। न वा मनसा चन[2]। १६। तृतीयस्येषुं विष्टुतिं[3] कृत्वाभिचरन्यजेत। १७। समानमितरच्छ्येनेन। १८। अश्वः श्यावो[4] दक्षिणा। स ब्रह्मणे देयः। १९। चतुर्थः सर्वस्वारः शुनस्कर्णस्तोमः। २०। मरणकामो यजेत यः कामयेतानामयता स्वर्गं लोकमियामिति[5]। २१। याम्यः[6] पशुः शुक्लहरित उ[7]पालम्भ्यः। २२। कृतान्नं दक्षिणा। २३। आर्भवे स्तूयमाने दक्षिणेनौदुम्बरीं पत्तोदशेनाहतेन वाससा दक्षिणाशिराः प्रावृतः संविशन्नाह ब्राह्मणाः समापयत मे यज्ञमिति। २४। तदैव[8] संतिष्ठते। २५।

---

१ पूर्वा DET. २ च instead of चन QT. ३ व्युष्टुतिं P, व्यष्टुतिं Q, व्युष्टितिं T. ४ श्वेतो S. ५ ०मीति DEST. ६ यामः ST. ७ ०हरित० ST. ८ तथैव QST.

भुवोक्थ्येन रथंतरसाम्ना भूतिकामो यजेत। २६।
धेनुर्दक्षिणा। २७।

इति सप्तमी कण्डिका।

अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति। १।
वैश्वदेवस्य लोके त्रिवृदग्निष्टोमः। २। वैश्वदेवः पशुः।
बार्हस्पत्यानूबन्ध्या। ३। प्रातःसवनीयान्वैश्वदेवहवीं-
ष्यनुनिर्वपति। ४। समानं तु स्विष्टकृदिडम्। ५। न
यूपं मिन्वन्ति। नोत्तरवेदिमुपवपन्ति। ६। परिधौ
पशुं नियुञ्जन्ति। उल्मुके बर्हिषि वा। ७। मिन्वन्त्यु-
त्तरेषु यूपान्। उत्तरवेदिमुपवपन्ति। ८। ततश्चतुर्षु
मासेषु वरुणप्रघासानां लोकेऽग्निष्टोम उक्थ्यः[1]।
उक्थ्यावग्निष्टोमौ[2] वा। ९। मारुतः पशुः। वारुणो
द्वितीये। मैत्रावरुण्यनूबन्ध्या। १०। वैश्वदेववद्वारुण-
प्रघासिकानि हवींषि। ११। मार्जालीये करम्भपात्रै-
श्चरन्ति। १२। ततश्चतुर्षु मासेषु साकमेधानां लोके
ऽग्निष्टोम उक्थ्यो ऽतिरात्रः। १३। आग्नेयः पशुः।
ऐन्द्राग्नो द्वितीये। ऐकादशिनास्तृतीये प्राजापत्यो
वा। सौर्यनू[3]बन्ध्या। १४। आनीकवतः प्रथमे ऽहनि
प्रातःसवनीयान्। सांतपनो माध्यंदिनीयान्। १५।

---

१ ऽग्निष्टोमोक्थ्यौ DES. २ उक्थ्याग्निष्टोमौ DE. ३ सौर्यानू० DES.

वसतीवरीषु परिहृतासु गृहमेधीयेन चरन्ति। १६। उत्तरस्याह्न उपाकृते प्रातरनुवाके पूर्णदर्व्येण[1] चरन्ति। १७। क्रैडिनः प्रातःसवनीयान्। स्वातवसो माध्यंदिनीयान्। महाहविस्तार्तीयसवनिकान्। १८। सन्नेषु नाराशंसेषु परिश्रिते मार्जालीये पितृयज्ञेन चरन्ति। १९। त्रैयम्बकैश्चरित्वा प्रत्येत्यादित्येन चरन्ति। २०।

इत्यष्टमी कण्डिका।

ततश्चतुर्षु मासेषु शुनासीरीयस्य लोके ज्योतिरग्निष्टोमः। १। वायव्यः पशुः। आश्विन्यनूबन्ध्या। २। वैश्वदेववच्छुनासीरीयहवींषि। ३। चातुर्मास्यवदन्तरालव्रतानि। ४। सर्वं चाहतं वसानो ऽवभृथादुदेति। ५। अन्वहं पञ्चाशत्पञ्चाशद्गा दक्षिणा ददाति। द्वादशं[2] शतमुत्तमे। ६। यथर्तुजा वा यथास्वं चातुर्मास्येषु। वत्सांस्तृतीयसवने सह मातृभिः। ७। उपहव्येनाग्निष्टोमेनानिरुक्तेन ग्रामकामो यजेत। ८। निरुक्तं[4] प्रातःसवनमित्येके। ९। अश्वः श्वेतो दक्षिणा। स ब्रह्मणे देयः। १०। ऋतपेयेनाग्निष्टोमेन बृहत्साम्ना

१ ०दर्वेण PQ. २ यम्ब० DES. ३ द्वादश DES. ४ अनिरुक्तं S.

स्वर्गकामः[१] । ११ । षड् दीक्षा नव वा । षडुपसदः । १२ । घृतव्रतो भवति । १३ । यावत्प्रथममङ्गु[२]लिकाण्डं तावत्क्रीते सोमे व्रतम् । १४ । उत्तरेणोत्तरेण काण्डेन व्रतमुपैति । १५ । नक्तमाहवनीयमभ्यावृत्यास्ते । दिवादित्यम् । १६ । ऋतमुक्त्वा प्रसर्पन्ति । ऋतं वदन्तो भक्षयन्ति । १७ । औदुम्बरश्चमसश्चतुःस्रक्तिः सोमस्य पूर्णः सगोत्राय प्रियाय[३] ब्रह्मणे देयः । १८ । बहुहिरण्येनाग्निष्टोमेनानडुहो लोकमाप्नोति ज्योतिष्मतो लोकाञ्जयति । १९ । द्वादशमानं हिरण्यं दीक्षणीयायां ददाति । द्विस्तावत्प्रायणीयायाम् । २० । एवमत ऊर्ध्वं द्विगुणाभ्यासेनातिथ्यायामुपसत्प्रयोगेष्व[४]ग्नीषोमीयस्य वपायामग्नीषोमीये[५] सवनीयस्य वपायां सवनीये[५] प्रातःसवने । २१ । सन्नेषु नाराशंसेष्वनडुच्छतमधिकं ददाति । २२ ।

इति नवमी कण्डिका ।

हिरण्यस्रजमुद्गात्रे षट्पुष्करां द्वादशपुष्करां वा यज्ञायज्ञीयस्य स्तोत्रेऽवभृथेष्ट्यामुदयनीयायामनूबन्ध्यायामुदवसानीयायां च । १ । त्रिवृताग्निष्टुताग्निष्टोमेन

---

१ DES add यजेत. २ यावत्प्रथमङ्गु० QT. ३ विप्राय DE. ४ T omits ष्व, उपसत्सु प्रवर्ग्येष्व० DES. ५ DES add च.

रथंतरसाम्ना ब्राह्मणो ब्रह्मवर्चसकामः । २ । पञ्चदशे-नेन्द्रस्तुतेन्द्रस्तोमेनोक्थ्येन बृहत्साम्ना राजन्यो वीर्य-कामः । ३ । सप्तदशेनाग्निष्टुताग्निष्टोमेन कण्वरथंतर-साम्ना वैश्यः पशुकामः । ४ । प्रतिधुषा प्रातःसवन इत्युक्तम् । ५ । तीव्रसुतोक्थ्येन रथंतरसाम्ना बृहत्साम्नो-भयसाम्ना वामयाविनमन्नाद्यकामं प्रजाकामं पशुकामं श्रिया वा प्रत्यवरूढं याजयेत् । ६ । शतमाशिरे दुहन्ति । ७ । ता दक्षिणा भवन्ति । ८ । वैश्यसव-वत्क्रयणानि । ९ । नीतमिश्रेण वा तृतीयसवने । १० । अभि सोमानुन्नयन्ति । ११ । अवजिघ्रन्त्यृत्विजो न भक्षयन्ति । १२ । तानच्छावाकस्य स्तोत्रे भक्षयन्ति । १३ । ब्रह्मणि होत्रका उपहवमिच्छन्ते । १४ । उभावध्वर्यू सर्वे चमसाध्वर्यवोऽच्छावाकाय प्रतिगृणन्ति[1] । १५ । प्राच्येकादशिनी संमीयते । १६ । यावद्यूपं वेदिमुद्धन्ति । १७ । वडबा[2] श्वेता गर्भिणी दक्षिणा । १८ । मरुत्स्तो-मेन[3] राजपुरोहितौ सायुज्यम्[4] । १९ । अथैष राड् । यो[5] राज्यमाशंसमानो न लभेत स एतेन । २० । विराजान्नाद्यकामः । स्वराजा प्रतिष्ठाकामः । २१ ।

इति दशमी कण्डिका ।

---

१ प्रतिमृजन्ति PQT. २ वडवा DES, वडवा QT. ३ मरुत्स्तोमेन DEPU.
४ सायुज्यकामो Q. ५ राज्ञो DES.

बहु प्रतिगृह्य यो गरगीरिव मन्येत स पुनस्तोमेन[१]। अनाश्यान्नस्य वा भुक्त्वा। १। अयाज्यं वा याजयित्वेत्येके। २। यो लघुरिवाप्रतिष्ठितः स्यात्स एतेन। ३। [२]एकविंशेनो[३]पच्छद्देन प्रजाकामः। ४। स्तोत्रेस्तोत्र एकैका स्तोत्रीयोपजायते। ५। गन्धर्वाप्सरसो मादयन्तामिति प्रातःसवने। ६। सन्नेषु नाराशंसेष्वधस्तात्पूतभृतो ऽंशुमुपास्यति। ७। गन्धर्वा देवा मादयन्तामिति माध्यंदिने। गन्धर्वाः पितरो मादयन्तामिति तृतीयसवने। ८। छद्देन[४] भ्रातृव्यवान्। ९। स्तोत्रेस्तोत्र एकैका स्तोत्रीयापध्वंसते। १०। तामस्यापध्वंसमानां भ्रातृव्यो ऽन्वपध्वंसत इति विज्ञायते। ११। सर्वतोमुखेन यः कामयेत सर्वमिदं भवेयमिति। १२। मध्ये गार्हपत्यः। प्रतिदिशं सौमिका[५] विहाराः। त्रिवृत्प्राच्यां दिशि। पञ्चदशो दक्षिणतः। सप्तदशः पश्चात्। एकविंश उत्तरतः। १३। राशिमरायू चतुष्टोमावन्नाद्यकामस्य। १४। धान्यराशिं पूर्वस्मिन्दधाति[६]। धान्यमरायुमुत्तरे। १५। गोतमचतुष्टोमाभ्यां पशुकामः। १६। उक्थ्यः षोडशिमानुत्तरः। १७।

---

१ PQTU add यजेत. २ QT omit एकविंशेन. ३ ॰णो॰ PQT.
४ छेदेन T, पच्छेदेन S. ५ सौमिको DES. ६ दधाति DES.

नपुंसकपशू इव[1] भवतः। १८। उद्भिद्वल[2]भिद्भ्यां पशुकामः। १९। उद्भिदेष्ट्वा संवत्सरे वल[2]भिदा यजेत। २०। आग्नेयेनाष्टाकपालेनान्तरालं प्रतिपद्यते। २१। उभयत्र गायत्रीः संपूर्णा[3] दक्षिणा ददाति। २२।

इत्येकादशी कण्डिका।

अष्टावष्टौ। १। अपचितिकामो ऽपचितिभ्याम्। २। उभयसामानौ भवतः। ३। तयोरश्वरथश्चतुर्युग्दक्षिणा। ४। सर्वे शतक्रियो ऽश्वाः। ५। स रुक्मी प्रावेपी[4] सर्वाभरण्यंशुमान्। ६। तस्य वैयाघ्रः परिवारो द्वैपो धन्वधिरार्क्षः कवचः। ७। अध्यास्थाता संनद्धः संनद्ध[5]सारथिरावृतः[6] प्रतिहिताभ्याम्[7]। ८। निष्की स्रग्वी[8] संग्रहीता भवतीति[9] विज्ञायते। ९। पक्षिभ्यां साग्निचित्याभ्यां यः कामयेत पक्षी ज्योतिष्मतः स्वर्गांल्लोकाननुसंचरेयमिति। १०। ऋषभेणा[10]ग्निष्टोमेन रथंतरसाम्ना राजानं[11] संग्रामे संयत्ते[12] याजयेत्। ११। यत्तत्र[13] विन्देरंस्ततो द्वादश[14]शतं

---

१ QTU omit इव. २ Most MSS. read बल॰. ३ संपन्ना DES. ४ प्रावेपि DEPSU. ५ संनद्धः S. ६ ॰वृत्तः QT, ॰वृत्त S, ॰वृत्ता DE. ७ प्रतिगृहीताभ्यां QU. ८ निष्कस्रग्वी DEU. ९ भवंतीति DES. १० DE add ऋग्निष्टुता. ११ राजन्यं DES. १२ संयवे DES. १३ ये तत्र DES. १४ द्वादशं P.

दक्षिणा। १२। व्योम्ना स्वर्गकामः। १३। उभे बृहद्रथंतरे भवतः। १४। सर्वः सप्तदशो भवति। १५। एकविंशमग्निष्टोमसाम। १६। गोसवेन षट्त्रिंशेनोक्थ्येन रथंतरसाम्ना बृहत्साम्नोभयसाम्ना वा स्वाराज्यकामः। १७। कण्वरथंतरं पवमाने। १८। अयुतं दक्षिणा। १९। दक्षिणेनाहवनीयमनुद्रुते वेद्यै बृहतः[1] स्तोत्रं प्रत्यभिषिच्यते प्रतिधुषा रेवज्जातः सहसा वृद्धः क्षत्राणां क्षत्रभृत्तमो वयोधाः। महान्महित्वे तस्तभानः क्षत्रे राष्ट्रे च जागृहि। प्रजापतेस्त्वा परमेष्ठिनः स्वाराज्येनाभिषिञ्चामीति[2]। २०।

इति द्वादशी कण्डिका।

---

तेनेष्ट्वा संवत्सरं पशुव्रतो भवति। १। [3]उपवहायोदकं पिबेत्तृणानि चाच्छिन्द्यात्। उप मातरमियादुप स्वसारमुप सगोत्राम्। २। यत्रयत्रैनं[4] विष्ठा विन्देत्तद्वितिष्ठेत। ३। मरुतां स्तोमेनानन्तां श्रियं जयति। ४। एतेन द्वौ चीर्त्वा याजयेत्। ५। अग्नेः कुलायावन्नाद्यकामस्य। ६। इन्द्राग्नियोः कुलायौ

---

१ All MSS., except S, omit the Visarga. २ In DES, this Kaṇḍikâ closes after the first sentence of the following Kaṇḍikâ. ३ उपावह्य॰ PTU. ४ DES omit the Anusvâra.

स्वर्गकामस्य।७। इन्द्रस्तुतेन्द्रस्तोमेनोक्थ्येन बृहत्साम्ना राजन्यो वीर्यकामः ।८। ऋषभो दक्षिणा ।९। इन्द्राग्नियोः[1] स्तोमेन राजपुरोहितावुभावेकर्द्धि[2] याजयेत्।१०। तेजो ब्रह्मवर्चसं ब्राह्मणस्य। विशं राजा प्रविशति।११। विघनेन वि पाप्मानं भ्रातृव्यं हते। तेन सर्वा मृधो विहते[3]।१२। वज्रेण षोडशिनाभिचरन्। संदंशेनाभिचरन्।१३। तयोः श्येनेन कल्पो व्याख्यातः।१४। त्रयोदशातिरात्राः[4]।१५। ज्योतिषर्द्धिकामः।१६। सर्वस्तोमेन बुभूषन्।१७। ऐकादशिनाः पशवः।१८। यस्मात्पशवः प्र प्रेव भ्रंशेरन्नप्तोर्यामेण। सर्वमाप्नोति सर्वं जयति।१९। नवसप्तदशेन प्रजाकामः।२०। विषुवता ज्यैष्ठिनेयः। ज्यैष्ठ्यमाप्नोति।२१। गोष्टोमेन बुभूषन् ।२२। आयुषा स्वर्गकामः ।२३। अभिजिता पशुकामः ।२४। विश्वजिता भ्रातृव्यवान्।२५। त्रिवृतान्नाद्यकामः।२६। पञ्चदशेन वीर्यकामः।२७। सप्तदशेन प्रजाकामः। २८। एकविंशेन प्रतिष्ठाकामः।२९।

इति त्रयोदशी कण्डिका।

---

१ All MSS., except S, omit the Visarga. २ °र्द्धिना ऊ° DEPQ.
३ विवहते DES. ४ °रात्रो DES.

द्विरात्रप्रभृतय उपरिष्टादतिरात्रा अहीना ऐकादशरात्रात्[1] । १ । तेषां द्वादशाहेनाहीनभूतेन कल्पो व्याख्यातः । २ । द्विरात्रस्यैन्द्रवायवाग्रं प्रथममहः शुक्राग्रमुत्तरम् । ३ । त्रिरात्रस्यैतच्चैवाग्रयणाग्रं च । ४ । चतूरात्रस्यैतच्चैवैन्द्रवायवाग्रं च । ५ । पञ्चरात्रस्यैतच्चैव शुक्राग्रं च । ६ । षड्रात्रे द्विः परिवर्तते । ७ । सप्तरात्रस्यैतच्चैवैन्द्रवायवाग्रं च । ८ । अष्टरात्रस्यैतच्चैव शुक्राग्रं च । ९ । नवरात्रे त्रिः परिवर्तते । १० । दशरात्रस्यैतच्चैवैन्द्रवायवाग्रं च । ११ । एकादशरात्रस्यैतच्चैव शुक्राग्रं च । १२ । द्वादशरात्रे चतुः परिवर्तते । १३ । षोडशिनो ग्रहणं द्विरात्रस्योत्तरे[2] ऽहन् । १४ । ग्राह्यो मध्यमे त्रिरात्रस्य । चतुर्थेचतुर्थे चतूरात्रप्रभृतिषु नानाहीनेषु । १५ । चत्वारो द्विरात्राः । १६ । व्युष्टिद्विरात्रः प्रथमः । स व्याख्यातः । १७ । आङ्गी[3]रसेन यः पुण्यो हीन इव स्यात्स एतेन[4] । १८ । ज्योतिष्टोमो ऽग्निष्टोमः पूर्वः । सर्वस्तोमो ऽतिरात्र उत्तरः । १९ । कापिवनेन यं कामं कामयते तम[5]भ्यश्नुते ऽलूक्षो भवति । २० । ज्योतिरुक्थ्यो ऽग्निष्टोमो वा पूर्वः । अतिरात्र उत्तरः ।

---

१ ०रात्रान्तात् DES. २ ०त्तमे QT. ३ आङ्गि० DEPU. ४ DES add यजेत. ५ तमेतेना० Q.

२१। त्रैधातवीयया प्राणेष्वन्नाद्ये च प्रतितिष्ठति ।२२। अग्निष्टोमः पूर्वः। अतिरात्र उत्तरः। २३।

इति चतुर्दशी कण्डिका।

गर्गत्रिरात्रेण प्रजातिं भूमानं गच्छत्यभि स्वर्गं लोकं जयत्येषु लोकेषु प्रतितिष्ठति वसूनुद्रानादित्यानन्वारोहति ।१। त्रैधातवीया दीक्षणीया[1] ।२। रोहिणी बभ्रुर्वा[2] पिङ्गलैकहायनी द्विहायनी वा सोमक्रयणी। ३। अग्निष्टोम उक्थ्यो ऽतिरात्रः। ४। रथंतरं वामदेव्यं बृहदिति पृष्ठानि ।५। सहस्रं दक्षिणा[3]। ६। त्रीणि शतानि त्रयस्त्रिंशतं च प्रथमे ऽहनि ददाति। एवं द्वितीये तृतीये च। ७। साहस्यतिरिच्यते रोहिण्युपध्वस्ता द्विरूपोभयत एन्यन्यतरतो वा। ८। यैव वरः कल्याणीत्युक्तम्। ९। उद्धृष्टिः[4] प्रथमे ऽहनि मुख्यः ।१०। तमभिमन्त्रयते त्वमग्न सहस्रमा नयोद्दलस्याभिनस्त्व[5]चम्। स नः सहस्रमा नय[6] प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति।

१ DES add भवति. २ ०र्वापि QT. ३ दक्षिणाः PQT. ४ Thus PU; उद्भृष्टिः QT, उद्दृष्टिः DE, उद्दिष्टः S. ५ Corrected; all MSS. have ०मस्त्व०. ६ सहस्र साधेद्धि DE.

११। वेहद्द्वितीये। १२। तामभिमन्त्रयते त्वमपामोषधीनां रसेन रसिनी बभूविथ। सा मा सहस्र आ भज प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति। १३। वामनस्तृतीये। १४। तमभिमन्त्रयते सहस्रस्य प्रतिष्ठासि वैष्णवो वामनस्त्वम्। स नः सहस्र आ धेहि प्रजया पशुभिः सह पुनर्मा विशताद्रयिरिति। १५। तामुत्तरेणाग्नीध्रमित्युक्तम्। १६।

इति पञ्चदशी कण्डिका।

---

दक्षिणेन वा वेदिं नीत्वान्तरा यूपमाहवनीयं च द्रोणकलशमवघ्रापयेदा जिघ्र कलशमिति। आग्नीध्रे[1] हविर्धाने वा। १। तामुदीचीमाग्नीध्रं नीत्वा तस्याः पृष्ठे तार्प्यमध्यस्यति। २। तस्मिन्धिष्णियानां रूपं विग्रथितं भवति। ३। अथ पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयादुभा जिग्यथुरिति। ४। रूपाणि[2] जुहोति यानि तस्यां भवन्ति। ५। आश्वमेधिकान्येके समामनन्ति। ६। प्रतीचीं[3] सदसः स्रक्तिमानीय तस्या उपोत्थाय दक्षिणं[4] कर्णमाजपेदिडे रन्त इति। ७। उत्सृज्य

---

१ आग्नीध्रीये DES. २ DES add च; comp. Taitt. S. 7. 1. 6. 8.
३ प्राचीं DE. ४ Q omits दक्षिणं; comp. Taitt. S. 7. 1. 6. 8.

विद्वानमुपैति । ८ । यद्यपुरुषाभिवीता प्राचीयादरात्सीदयं यजमानः कल्याणं लोकमजैषीदिति विद्यात् । यदि दक्षिणा क्षिप्रे ऽस्माल्लोकात्प्रैष्यति[1] । यदि प्रतीची बहुधान्यो भविष्यति । यद्युदीची श्रेयानस्मिंल्लोके भविष्यतीति । ९ । तां यजमानो ऽभिमन्त्रयते सा मा सुवर्गं लोकं गमयेति । १० । यास्तिस्रस्तिस्रस्त्रिंशत्यधि तास्वेनामुपसमाहृत्य[2] तामग्नीधे ब्रह्मणे होत्र उद्गात्र उन्नेत्रे ऽध्वर्यवे वा दद्यात् । ११ । द्वौ वोन्नेतारौ कृत्वा यतरो नाश्रावयेत्तस्मै वा । १२ । द्विभागं वा[3] ब्रह्मणे तृतीयमग्नीधे । १३ । सर्वेभ्यो वा सदस्येभ्यः । १४ । उदाकृत्या वा सा वशं चरेत् । यस्तामविद्वान्प्रतिगृह्णातीत्युक्तम् । १५ । तां शतमानेन हिरण्येन निष्क्रीय यजमानस्य गोष्ठे विसृजति[4] । १६ ।

इति षोडशी कण्डिका ।

---

दश प्रथमे ऽहन्ना[5]शिरं दुहन्ति । विंशतिं द्वितीये । त्रिंशतं तृतीये । १ । कृतान्नं प्रथमे ऽहनि देयम् ।

---

१ ०तीति DEQS.　२ ०माहृत्य S; comp. S'atap. Br. 4. 5. 8. 12.
३ S omits वा; comp. Taitt. S. 7. 1. 5. 7.　४ ऽपिसृजति DES.
५ ऽहन्या० DES.

हिरण्यं गौर्वास इति द्वितीये। अनो रथो ऽश्वो हस्ती पुरुष इति तृतीये। २। न साहस्रे[1] ऽधि किं[2] चिद्दद्यात्। ३। दद्यादित्येके। ४। यदि दद्यादनूबन्ध्यावपायां हुतायां दक्षिणा[3] नयन्नन्यूना दशतो नयेत्। ५। यस्मा एकां गां दास्यन्स्या[4]द्दशभ्यस्तेभ्यो दशत[5]मुपा[6]कुर्यात्। ६। यस्मै द्वे पञ्चभ्यः। यस्मै पञ्च द्वाभ्याम्। ७। एवमा शताद्दा वा सहस्रात्। ८। उत्तमां दक्षिणां नीत्वोदवसाय वा शबली। ९। समुद्रो ऽसि विश्वव्यचा ब्रह्मा देवानां प्रथमजा ऋतस्य। अन्नमसि शुक्रमसि ज्योतिरस्यमृतमसि। तां त्वा विद्म शबलि दीद्यानाम्। तस्यास्ते पृथिवी पादो ऽन्तरिक्षं पादो द्यौः पादः समुद्रः पादः। एषासि शबलि तां त्वा विद्म सा न इषमूर्जं धुक्ष्व वसोर्धारां शबलि प्रजानां शविष्ठा व्रजम[7]नुगेषं स्वाहेति शबलीहोमं जुहोति। १०।

इति सप्तदशी कण्डिका।

अश्वमेधस्याग्निष्टोम उक्थ्यो ऽतिरात्रः। १। रथंतरं महानाम्नी बृहदिति पृष्ठानि। २। राजा यजेत यः

---

१ सहस्रे DES. २ ऽधिकं DES. ३ दक्षिणां DES. ४ °न्स्या° DEPU. ५ दशशत° DEQTU; comp. S'at. Br. 4. 5. 8. 16. ६ °मपा° DES. ७ प्रजाम° Q, मृतम° T.

अहीनः



कामयेत सर्वमिदं भवेयमिति । ३ । बैदचिरात्रेण स्वाराज्यकामः । ४ । चयस्त्रिवृतो ऽतिरात्राः षोडशिमन्तः । ५ । रथंतरं वामदेव्यं बृहदिति पृष्ठानि । ६ । गर्गत्रिरात्रेणोत्तरेषां चयाणामहानि पृष्ठानीति[1] व्याख्यातानि[2] । ७ । छन्दोमपवमानेन पशुकामः । ८ । अन्तर्वसुना पशूनाप्नोति । ९ । पराकेण स्वर्गकामः । १० । चत्वारश्चतूरात्राः । ११ । अत्रेः प्रथमश्चतुर्वीरः । १२ । चत्वारो ऽस्य वीराः कुल आजायन्ते सुहोतेत्युक्तम् । १३ । अग्निष्टोम उक्थ्यावतिरात्रो ऽत्रेरेव चत्वारश्चतुष्टोमाः । १४ । अत्रिं श्रद्धादेवमित्युक्तम् । १५ । जामदग्न्येन[3] पुष्टिकामः । १६ । पुरोडाशिन्य उपसदो भवन्ति । १७ । आग्नेय एककपाल आश्विनो द्विकपालो वैष्णवस्त्रिकपालः सौम्यश्चतुष्कपालः सावित्रः पञ्चकपालो धात्रः षट्कपालो मारुतः सप्तकपालो बार्हस्पत्यो ऽष्टाकपालो मैत्रो नवकपालो वारुणो दशकपाल ऐन्द्र एकादशकपालो वैश्वदेवो द्वादशकपालः । १८ । दर्विहोमा भवन्ति । १९ ।

इत्यष्टादशी कण्डिका ।

---

१ DES omit इति.　२ DES add भवन्ति.　३ ॰दग्नेन DES.

अग्ने वेर्होत्रं वेरध्वरमा पितरं वैश्वानरमवसे करि-न्द्राय देवेभ्यो जुषतां[1] हविः स्वाहा। देवावश्विना[2] मधुकशयाद्यास्मिन्यज्ञे यजमानाय मिमिक्षतम्। देव विष्णवु[3]र्वद्येमं यज्ञं यजमानायानुविक्रमस्व। देव सोम रेतोधा अद्यास्मिन्यज्ञे यजमानायैधि। देव सवितः सुषावित्रमद्यास्मिन्यज्ञे यजमानायासुवस्व। देव धातः सुधाताद्यास्मिन्यज्ञे यजमानायैधि। देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदत। देव्य-दिते ऽन्वद्येमं यज्ञं[4] यजमानायैधि[5]। देव्यनुमते ऽन्व-द्येमं यज्ञं यजमानाय मन्यस्व। दिव्या[6] आपो नन्नम्य-ध्वमद्यास्मिन्यज्ञे यजमानाय। सदःसदः प्रजावान्दभु-र्जुषाणः[7]। देवेन्द्रेन्द्रि[8]यमद्यास्मिन्यज्ञे यजमानायैधि। देव त्वष्टः सुरेतोधा अद्यास्मिन्यज्ञे यजमानायैधीति प्रतिनिगद्य होमाः।१। इन्द्राय देवेभ्यो जुषतां[9] हविः स्वाहेति सर्वत्रानुषजति।२।

इत्येकोनविंशी कण्डिका।

---

१ भवतां DE, जुङ्ता Pañchav. Br. 21. 10. 11, Kâty. S'r. 23. 3. 1. २ ॰श्विनौ DES, like Pañch. Br. and Kâty. S'r. ३ विष्णा उ॰ DE, like the two corresponding texts. ४ स्वादित्यमद्यास्मिन्यज्ञे DES, like the two corr. texts. ५ ॰नायासुवस्व DES, like the two corr. texts. ६ देव्या DE, देव्य S. ७ ॰न्दपिभिर्जु॰ QT. ८ देवेन्द्रि॰ SU. ९ जुङ्ता S.

अहीन:



वसिष्ठस्य संसर्पः। यः पुण्यो हीन इव स्यात्स एतेन। १। विश्वामित्रस्य संजयः। भ्रातृव्यवान्यजेत। २। पञ्च पञ्चाहाः। ३। संवत्सरो वा इदमेक आसी-दित्युक्तम्। ४। अभ्यासङ्ग्यो द्वितीयः। ५। यं कामं कामयते[1] तमभ्यश्नुते[2]। ६। अग्निष्टोमस्त्रय उक्थ्या अतिरात्रः। ७। त्रिवृती[3] द्वे सवने पञ्चदशमेकम्। पञ्चदशे द्वे सप्तदशमेकम्। सप्तदशे द्वे एकविंशमेकम्। एकविंशे द्वे त्रिणवमेकम्। त्रिणवे द्वे त्रयस्त्रिंशमेकम्। ८। पञ्चशारदीयेन बहोर्भूयान्भवति। ९। अनुसंवत्सरं पशुबन्धेन यजते। १०। सप्तदश पृश्नीनुक्ष्णः पञ्च-वर्षानानयन्ति। सप्तदश पृश्नीर्वत्सतर्यस्त्रिवत्सा अप्र-वीताः। ११। [4]प्रोक्षितान्पर्यग्निकृतानुक्ष्ण उत्सृजन्ति। वत्सतरीरालभन्ते। १२। वर्णाननुक्रमिष्यामः। १३। राजीवा नवनीतपृश्नीररुणाः पिशङ्गीः सारङ्गीरुत्त-मीरा[5]लभ्य दीक्षन्ते। १४। त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यः पञ्चदश उक्थ्यः सप्तदशो ऽतिरात्रः। १५। एत उक्षाणः सवनीयाः। १६। त्रींस्त्रीनन्वहमालभन्ते। पञ्चोत्तमे ऽहन्[6]। १७। ऐन्द्र-

---

१ कामयेत DES. २ तमेतेना॰ Q. ३ त्रिवृत्ति DES. ४ DES add ताम्. ५ Thus all MSS. and the quotation in the commentary on Pañchav. Br. 21. 14. 8. ६ ऽहनि DES.

मारुता उक्षाणः। मारुत्यो वत्सतर्यः। १८। यद्युक्ष्णो रुद्रो ऽभिमन्येत। १९।

इति विंशी कण्डिका।

---

अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेत्। १। अपोनप्त्रीयं चरुं यद्यप्सु पतेत्। २। नैरृतं चरुं यद्यवसीदेत्। ३। भौमं चरुमेककपालं वा यद्यवसन्नः[१] संशीर्णो वा। ४। बार्हस्पत्यं चरुं यदि स्लोणः कूटो वा। ५। यदि नश्येद्वायव्यं चरुम्। ६। यदि सेनाभीत्वरी विन्देतेन्द्राय जयत एकादशकपालम्। ७। यदि प्रासहा नयेयुरिन्द्राय प्रसह्वन एकादशकपालम्। ८। यद्यन्धः स्यात्सौर्यं चरुमेककपालं वा। ९। यदि श्वभ्रं प्र[२]पतेद्वैष्णवं चरुम्। १०। यद्यविज्ञातेन यक्ष्मणा म्रियेत प्राजापत्यं चरुं द्वादशकपालं वा। ११। चतुर्थो ऽन्तर्महाव्रतः। १२। भ्रातृव्यवान्यजेत। १३। त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यो महाव्रतं सप्तदश उक्थ्य एकविंशो ऽतिरात्रः। १४। पुरुषमेधः पञ्चमः। १५। पञ्चशारदीयवदहानि[३]। १६। अयुतं प्रथमे ऽहनि

---

१ यद्युत्सन्नः S, यद्युद्यवत्सन्नः DE. २ स्वभ्रे ऽप० S. ३ DES add अग्निष्टोमो गोपोत्तमो.

अहीनः



ददाति। नियुतं द्वितीये। अर्बुदं[1] न्यर्बुदं च तृतीये। यथा प्रथमयोरेवमुत्तरयोः। १७।

इत्येकविंशी कण्डिका।

---

चत्वारः षडहाः। १। साध्यानां प्रथमः। २। साध्या वै देवाः सुवर्गकामा इत्युक्तम्। ३। ऋतूनां द्वितीयेन प्रजाकामः। ४। पृष्ठ्यः षडहः। ५। तृतीयेनोपरिष्टात्त्रिकद्रुकेण यं कामं कामयते तमभ्यश्नुते। ६। त्रिवृदग्निष्टोमः पञ्चदश उकथ्यः सप्तदश उक्थ्यो ज्योतिर्गौरायुरतिरात्रः। ७। चतुर्थेन प्रैव जायते प्रजया पशुभिः। ८। अभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः। ९। अष्टौ सप्तरात्राः। १०। कौसुरुबिन्देन पशुकामः। ११। स व्याख्यातः। १२। सप्तर्षीणां द्वितीयेन स्वर्गकामः। १३। पृष्ठ्यः षडहो महाव्रतवानतिरात्रः। १४। प्राजापत्येन प्रजाकामः। १५। पृष्ठ्यः षडहः प्राजापत्यं महाव्रतमतिरात्रे। १६। छन्दोमपवमानेन पशुकामः। १७। पृष्ठ्यः षडहश्छन्दोमपवमानं महाव्रतमतिरात्रे[3]। १८। पृष्ठ्यावलम्बेना-

---

१ DES add च. २ तमेतेना॰ DES. ३ ॰तिरात्रः QTU.

न्नाद्यकामः ।१६। पृष्ठ्यस्तोमः षडहो महाव्रतवानति[1]रात्रः।२०।

इति द्वाविंशी कण्डिका।

सत्रसंमितेनान्नाद्यकामः ।१। कौसुरुबिन्दवद्हानि।२। ऐन्द्रेणौ[2]जस्कामः ।३। ज्योतिर्गौरायुरथाभिजिद्विश्वजित्सर्वजित्सर्वस्तोमो ऽतिरात्रः ।४। जनकसप्तरात्रेण प्रजातिं भूमानं गच्छत्यभि स्वर्गं लोकं जयत्येषु लोकेषु प्रतितिष्ठति।५। चत्वारि त्रिवृन्त्यहान्यग्निष्टोममुखानि विश्वजिन्महाव्रतं ज्योतिष्टोमो वैश्वानरो ऽतिरात्रः।६। अष्टरात्रेण ब्रह्मवर्चसकामः। स व्याख्यातः।७। त्रयो नवरात्राः।८। प्रथमेनायुष्कामः।९। पृष्ठ्यः षडहो ज्योतिर्गौरायुरतिरात्रः।१०। द्वितीयेन ब्रह्मवर्चसकामः।११। त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यो ऽभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः।१२। शललीपिशङ्गेनान्नाद्यकामः।१३। ज्योतिर्गौरायुर्ज्योतिर्गौरायुरायुर्गौर्ज्योतिरतिरात्रः ।१४। चत्वारो दशरात्राः।१५। दशरात्राय दीक्षिष्यमाणो दशहोतारं मनसानुद्रुत्याहवनीये सग्रहं जुहु-

१ °व्रतमति° DES. २ Corrected; all MSS. have °णौ°.

अद्दीनः



यात्।१६। त्रिककुत्प्रथमः। त्रिककुत्प्रजानां समानानां च[1] भवति ।१७। त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यस्त्रिवृदग्निष्टोमः सप्तदशो ऽग्निष्टोम एकविंश उक्थ्यः सप्तदशो ऽग्निष्टोमस्त्रिणवो ऽग्निष्टोमस्त्रयस्त्रिंश उक्थ्यस्त्रिणवो ऽग्निष्टोमो विश्वजित्सर्वपृष्ठो ऽतिरात्रः।१८।

इति त्रयोविंशी कण्डिका।

देवपुराभिचर्यमाणः ।१। त्रिष्टोमो ऽग्निष्टोमो ज्योतिरुक्थ्यस्त्रिष्टोमो ऽग्निष्टोमो ऽभिजिदग्निष्टोमो गौरुक्थ्यो ऽभिजिदग्निष्टोमो विश्वजिदग्निष्टोम आयुरुक्थ्यो विश्वजिदग्निष्टोमः सर्वस्तोमो ऽतिरात्रः।२। छन्दोमवता पुरुषं पशूनोजो वीर्यमाप्नोति।३। अभ्यासङ्ग्यः षडहस्त्रयश्छन्दोमा अतिरात्रः ।४। अथैकेषाम्। अभ्यासङ्ग्यः पञ्चाहश्चत्वारश्छन्दोमा अतिरात्रः।५। कौसुरुबिन्देन बहोर्भूयान्भवति।६। त्रयस्त्रिवृतो ऽग्निष्टोमास्त्रयः पञ्चदशा उक्थ्यास्त्रयः सप्तदशा उक्थ्या एकविंशो ऽतिरात्रः।७। पौण्डरीक एकादशरात्रो ऽयुतदक्षिणः।८। अन्वहं सहस्राणि ददाति। अश्वसहस्रमुत्तमे ऽश्वशतं वा।९। तेन सर्वामृद्धिमृध्नोति[2] परमेष्ठितां गच्छत्यभि स्वर्गं[3] लोकं जयत्येषु

१ S omits च. २ °माप्नोति DE. ३ सुवर्गं DE.

लोकेषु प्रतितिष्ठति। १०। अभ्यासङ्ग्यः षडहस्त्रिवृत्स्तोमो ऽग्निष्टोमस्त्रयस्छन्दोमा अतिरात्रः। ११। अथैकेषाम्। अभ्यासङ्ग्यः पञ्चाहश्चत्वारश्छन्दोमा महाव्रतं विश्वजित्सर्वपृष्ठो ऽतिरात्रः। १२।

इति चतुर्विंशी कण्डिका।

अथ सवानां व्याख्यातो बृहस्पतिसवः। १। वैश्यः पुष्टिकामः। २। आग्नेयादीनि सप्त हवींषि निर्वपति। ३। पृश्निः पष्ठौही मारुत्यालभ्यते। ४। तस्याः[१] पुरस्तात्स्विष्टकृतो यजमानायतन ऋषभचर्म प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्नासीनं यजमानं दध्नाभिषिञ्चति। ५। ब्राह्मणो ब्रह्मवर्चसकामः। ६। आग्नेयादीन्यष्टौ हवींषि निर्वपति। ७। पुरस्तात्स्विष्टकृतो हिरण्येन घृतमुत्पूय तेन कृष्णाजिन आसीनमभिषिञ्चति। ८। अथ सोमसवः। ९। यत्किंच राजसूयमृते सोमं तत्सर्वं भवति। १०। मैत्राबार्हस्पत्यं संस्थाप्य सौमीं सूतवशामा[२]लभते। ११। तस्याः पुरस्तात्स्विष्टकृतो ऽषाढं युत्सु पृतनासु पप्रिमिति सौम्यर्चाद्भिरभिषिञ्चति। १२। शेषं संस्थाप्य संसृपां हवि-

१ तस्यां QT. २ DES add अनूबन्ध्याम्.

भिर्दिशामवेष्ट्या द्विपशुना पशुबन्धेन सात्यदूतानां हविर्भिः प्रयुजामिति यजते । १३ । पृथिसवेन[१] पशुकामः । १४ । यत्किंच राजसूयमनुत्तरवेदिकं[२] तत्सर्वं भवति । १५ । मैत्राबार्हस्पत्यस्य[३] पुरस्तात्स्विष्टकृतो ये मे पञ्चाशतमि[४]ति नाराशंस्यर्चाङ्गिरभिषिञ्चति । १६ । समानमुत्तरं पूर्वेण पशुबन्धवर्जम् । १७ । व्याख्यातो गोसवः । १८ । ओदनसवेनान्नाद्यकामः । १९ । रोहिण्यां यजतोपव्युषं[५] श्रपयति । २० । दर्विहोमो भवति । २१ । उदित आदित्ये सिंहे व्याघ्र इति चतस्र आहुतीरोदनाद्धुत्वा राडसि विराडसीत्येतैः प्रतिमन्त्रम् । २२ ।

इति पञ्चविंशी कण्डिका ।

मन्थान्कल्पयन्ति[६] । आज्यमन्थं ब्राह्मणः पयोमन्थं राजन्यो दधिमन्थं वैश्य उदमन्थं शूद्रः । १ । इन्द्राय त्वा तेजस्वते तेजस्वन्तं श्रीणामीति ब्राह्मणः सक्तुभि-

१ Thus P only (comp. commentary on Taitt. Br. I. p. 761–763); all other MSS. have पृथिवीसवेन or (Q) पृथ्वी°. २ °वेदोक्तं QT and Taitt. Br. 2, 7, 5, 2. ३ °स्पत्यः DES. ४ DES add ददुर् (Taitt. Br. 2, 7, 5, 2). ५ Thus all MSS. and the quotation in the commentary on Taitt. Br. I. p. 766, l. 3. ६ °यति PQS.

राज्यं श्रीत्वा तेजो ऽसीत्यभिमन्त्र्य तत्ते प्रयच्छामीति यजमानाय प्रयच्छति । २ । तेजस्वदस्तु मे मुखमिति प्रतिगृह्य भक्षयति । ३ । एवमितरेषामुत्तरउत्तरः[1] अयणो ऽभिमन्त्रणः प्रदानो भक्षणश्च यथालिङ्गम् । ४ । सर्वान्यजमानो भक्षयित्वा[2] हिरण्यं ब्राह्मणाय ददाति । तिसृधन्वं राजन्याय । अष्ट्रां वैश्याय । माषकमण्डलुं शूद्राय । ५ । ओदनशेषं यजमानः प्राश्नाति । ६ । इममग्न आयुषे वर्चसे कृधीति प्राश्नन्तमभिमन्त्रयते । ७ । हिरण्यं यजमानायाबध्नाति[3] । ८ । आयुरसि विश्वायुरसीत्याबध्यमाने जपति । ९ । अपां ग्रहान्गृह्णन्ति[4] ये मन्थान्कल्पयन्त्यपां यो द्रवणे रस इत्येतैः प्रतिमन्त्रम् । १० । तैरेनं संसृष्टैरभिषिञ्चति यतो वातो मनोजवा इति । ११ । समुद्र इवासि गह्मनेत्येनमभिमन्त्र्याथैनं त्रिभिर्दर्भपुञ्जीलैः[5] पवयति । १२ । अवभृथप्रत्याम्नायो भवतीति विज्ञायते । १३ । अग्रेणाहवनीयं रथो ऽव[6]स्थितो भवति । १४ । अभि प्रेहीति तं यजमानो ऽभ्येति[7] । १५ । आतिष्ठ मित्र-

---

१ All MSS. omit the Visarga ; उत्तरमुत्तरं DES. २ भक्षयेत् DES. ३ ०नाय बध्नाति DEST. ४ गृह्णाति DEPSU. ५ ०पिञ्जूलैः DES. ६ DES omit ऽव . ७ ऽभ्यैति DEP.

सव:



वर्धन इत्यारोहन्तमभिमन्त्रयते । १६ । अङ्क्षौ न्यङ्क्षा-
विति रथचक्रे अभिमृशति । पथ्सी वा । १७ । आतिष्ठ
वृत्रहन्निति पञ्चभिरारूढम्[1] । १८ । दिद्दक्षेण्यो दर्श-
नीयो भवति य एतेन यजत इति विज्ञायते । १९ ।

इति षड्विंशी कण्डिका ।

~~~~~~~~~~~~~~~~~~~~~~~~

संतिष्ठत ओदनसवः । १ । व्याख्यातः पञ्चशार-
दीयः । २ । तथाग्निष्टुत् । ३ । तस्य पुरोरुचः । ४ ।
अस्याजरासो ऽग्न आयूंषि पवस इत्यै[2]न्द्रवायवस्य ।
द्वितीया मैत्रावरुणस्य । तृतीयाश्विनस्य । चतुर्थीं
पञ्चमी च शुक्रामन्थिनोः षष्ठ्याग्रयणस्य । ५ । अन्या-
माग्नेयीमुक्थ्यस्य नियुनक्ति । ६ । नित्या ध्रुवस्य । ७ ।
नियुनक्त्यैन्द्राग्नवैश्वदेवयोः । ८ । अग्निश्रिय इति तिस्रो
मरुत्वतीयानाम् । श्रुधि श्रुत्कर्णेत्युत्तरां माहेन्द्रस्य ।
विश्वेषामदितिरिति तिस्र आदित्यग्रहस्य । उत्तमा
सावित्रस्य । ९ । नियुनक्ति वैश्वदेवस्य । १० । नित्या
पात्नीवतस्य । ११ । नियुनक्ति हारियोजनस्य । १२ ।
इन्द्रस्तुतेन्द्रस्तोमेनोक्थ्येनेन्द्रियकामो वीर्यकामो[3] वा

---

१ ०रूढो DES.   २ आयूंषीत्यै० DE.   ३ PQT omit वीर्यकामो.
~~~~~~~~~~~~~~~~~~~~~~~~

यजेत। १३। ऐन्द्रियः[१] पुरोरुचः। १४। तिष्ठा हरी कस्य वृषेत्यैन्द्रवायवस्य। तृतीया मैत्रावरुणस्य। चतुर्थ्याश्विनस्य। पञ्चमी षष्ठी च शुक्रामन्थिनोः। सप्तम्याग्रयणस्य। १५। नित्योक्थ्यस्य। १६। नियुनक्ति ध्रुवैन्द्राग्नवैश्वदेवानाम्। १७। नित्या मरुत्वतीयमाहेन्द्राणाम्। १८। आ नो विश्वाभिरूतिभिरिति तिस्र आदित्य[२]ग्रहस्य। उत्तमा सावित्रस्य। १९। नियुनक्ति वैश्वदेवपात्नीवतयोः। २०। नित्या हारियोजनस्य। २१। व्याख्यातो ऽप्तोर्यामः। २२।

इति सप्तविंशी कण्डिका।

राजाभिषेक्ष्यमाणो[३] जनपदेषु समवेतेषु द्वयोः पुण्याहयोः पूर्वस्मिन्स्थण्डिलं कल्पयित्वाग्निमुपसमाधाय संपरिस्तीर्य वसति। १। उदित आदित्ये ये केशिनो नर्तं ब्रह्मण इति द्वे आहुती हुत्वा राडसि विराडसीति यजमानायतन औदुम्बरीमासन्दीं प्रतिष्ठापयति। २। तां राजारोहति। ३। आरोह प्रोष्ठमित्यारोहन्तमभिमन्त्रयते। ४। अत्र वरं ददाति। ५।

---

१ ऐन्द्राः PQU. २ आदित्यस्य DE. ३ ०भिषिच्यमाणो DE.

सव ः



तस्यामासीनः केशान्वापयते[1] येनावपत्सविता क्षुरेणेति। ६। मा ते केशानिति[2] केशान्प्रकीर्यमाणाननुमन्त्रयते। ७। तान्समोप्य दर्भस्तम्बे निदधाति तेभ्यो निधानमिति। ८। अथैनमाज्यमिश्रेण पयसानक्ति। बलं ते बाहुवोरिति बाहू। यत्सीमन्तमिति शिरः। ९। व्याघ्रो ऽयमग्नाविति सप्ताहुतीर्हुत्वा द्यौरसि पृथिव्यसीति यजमानायतने शार्दूलचर्म प्राचीनग्रीवमुत्तरलोमास्तृणाति। १०। तस्मिन्राजोपविशति। ११। व्याघ्रो वैय्याघ्र इत्यासीनमभिमन्त्रयते। १२। अथैनं तोक्मावास्ताभिर्दूर्वावास्ताभिर्वाद्भिरभिषिञ्चति या दिव्या आप इति प्रतिपद्या[3] पाङ्क्तात्। १३। अरुणं त्वा वृकमित्येनमभिमन्त्र्य प्र बाहवेति बाहू प्रसार्येन्द्रस्य ते वीर्यकृत इत्युपावहरति[4]। १४। अग्रेणाग्निं[5] रथो ऽवस्थितो भवति। १५। अभि प्रेहीति तं राजाभ्येति[6]। १६। आतिष्ठ वृत्रहन्तम इत्यारोहन्तमभिमन्त्रयते। १७। अङ्कौ न्यङ्कावविति रथचक्रे अभिमृशति। पक्षसी वा। १८। नमस्त ऋष इति पुरोहितमभिमन्त्रयते। १९। तिष्ठा रथ इति सारथिम्। २०। आ रश्मीनिति रश्मीनालभते। २१। आतिष्ठ

१ ॰पयेत DES. २ DES put मा ते केशानिति after ॰नुमन्त्रयते. ३ प्रतिपाद्या QS. ४ ॰वरोहति DES. ५ अग्रेणाग्नीध्रं DE. ६ ॰भ्यैति DEP.

वृचद्दन्निति षड्भिरारूढम् । २२ । परि मा सेन्या इति द्वे वाचयित्वोत्तराभिस्तिसृभिरभिमन्त्र्योदसावेत्वित्यादित्यमुदीक्षयति । २३ । अन्ववतामिति जनपदाननुवीक्षते । २४ । संतिष्ठते राजाभिषेकः । २५ । व्याख्यातो विघनः । २६ । संतिष्ठन्ते[१] सवाः सवाः । २७ ।

इत्यष्टाविंशी कण्डिका ।

इति द्वाविंशः प्रश्नः ॥

---

१ Corrected ; all MSS. have संतिष्ठते.

सत्राणि

ओम् ॥

चतुर्विंशतिपरमाः सत्त्रमासीरन् । १ । तेषां द्वादशाहेन सत्त्रभूतेन कल्पो व्याख्यातो यानि पुरस्तात्संवत्सरात् । गवामयनेनेतरेषाम् । २ । उभयतोऽतिरात्राणि भवन्ति । ३ । तृतीयं पञ्चदशरात्रं परिहाप्य कुण्डपायिनां च सत्त्रम् । ४ । ऋतूना[1]मेकादशरात्रेण प्रजां सृजन्ते प्रजामवरुन्धते प्रजां विन्दन्ते प्रजावन्तो भवन्ति । ५ । ज्योतिरतिरात्रः पृष्ठ्यः षडहस्त्रयश्छन्दोमा अतिरात्रः । ६ । द्वौ त्रयोदशरात्रौ । ७ । यं कामं कामयन्ते तम[2]भ्यश्नुवते[3] । ८ । अतिरात्रः पृष्ठ्यः षडहः सर्वस्तोमो[4] ऽतिरात्रश्चत्वारश्छन्दोमा अतिरात्रः । ९ । द्वितीयं ब्रह्मवर्चसकामा उपेयुः । १० । अतिरात्रो द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च । ११ । त्रयश्चतुर्दशरात्राः । १२ । यं कामं कामयन्ते[5] तमभ्यश्नुवते[6] । १३ । अतिरात्रः पृष्ठ्यः षडह आवृत्तः पृष्ठ्यः

---

१ ऋतताना॰ OT. २ तमेतेना॰ T. ३ ॰श्नुते QT. ४ सर्वतस्तोमो QT.
५ कामयते OQT. ६ ॰श्नवे DEQT.

षडहो ऽतिरात्रः। १४। द्वितीयं यांस्तल्प उदके विवाहे वा मीमांसेरन्। १५। अतिरात्रो ज्योतिर्गौरायुस्त्र्यहः पृष्ठ्यः षडह आयुर्गौर्ज्योतिरतिरात्रः। १६। तृतीयमृद्धिकामा उपेयुः। १७। अतिरात्रो गोआयुषी द्वादशाहस्य दशाहान्यतिरात्रः। १८।

इति प्रथमा कण्डिका।

---

चत्वारः पञ्चदशरात्राः। १। दैवत्वं गच्छति। २। अमावास्यायां प्रायणीयो ऽष्टम्यां महाव्रतं पौर्णमास्यामुदयनीयः। एतद्वा विपरीतम्। ३। अतिरात्रः पृष्ठ्यः षडहो महाव्रतमावृत्तः पृष्ठ्यः षडहो ऽतिरात्रः। ४। द्वितीयं ब्रह्मवर्चसकामा उपेयुः। ५। अतिरात्रस्त्रिवृदग्निष्टुज्ज्योतिर्गौरायुस्त्र्यहः पृष्ठ्यः षडह आयुर्गौर्ज्योतिरतिरात्रः। ६। तृतीयेनोभौ कामाववरुन्धते[1] यः सत्त्रे यश्चाहीने। ७। त्रिवृदग्निष्टुज्ज्योतिर्गौरायुस्त्र्यहो[2] द्वादशाहस्य दशाहान्यतिरात्रः। ८। चतुर्थेन प्रैव जायन्ते प्रजया पशुभिः। ९। अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वादशाहस्य दशाहान्यतिरात्रः। १०। ऐन्द्रं षोडशरात्रमोजस्कामा उपेयुः। ११। एता[3] एव समहा-

---

१ ०वरंते DE. २ ०स्त्र्यहं DE. ३ Supply râtrayaḥ.

सत्राणि



व्रताः। १२। सप्तदशरात्रमन्नाद्यकामा उपेयुः। १३। अतिरात्रो ज्योतिर्गौरायुर्गौरायुःपञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः। १४। अष्टादशरात्रं पशुकामा उपेयुः। १५। अतिरात्रो ऽभिप्लवः षडहो द्वादशाहस्य दशाहान्यतिरात्रः। १६। एकान्न[1]विंशतिरात्रेण प्र प्रजया पशुभिर्जायन्ते। १७। एता एव समहाव्रताः। १८। विंशतिरात्रेण ब्रह्मवर्चसिनो ऽन्नादा भवन्ति। १९। अतिरात्रो ऽभिप्लवः षडहो ऽभिजिद्विश्वजितौ द्वादशाहस्य दशाहान्यतिरात्रः। २०।

इति द्वितीया कण्डिका।

द्वावेकविंशतिरात्रौ। १। यं कामं कामयन्ते[2] तमभ्यश्नुवते[3]। २। अतिरात्रो ऽभिप्लवः षडहो ऽतिरात्रो द्वावभिप्लवावतिरात्रः। ३। द्वितीयं ब्रह्मवर्चसकामा उपेयुः। ४। सोमापौष्णः पशुरुपालम्भ्यः। ५। मनो-र्ऋचः सामिधेन्यः। ६। निदाघ उपयन्ति। ७। अप तमो घ्नते। ८। अतिरात्रः पृष्ठ्यः षडहस्त्रयः स्वर-सामानो दिवाकीर्त्यमहस्त्रयः स्वरसामान आवृत्तः

१ एकोन॰ OP. २ कामयते T. ३ ॰श्नुते QT. ४ Corrected (comp. मानव्यः सामिधेन्यः Kâtyâyana S'rautas. 24. 2. 8); मनो ऋचः DEO, मनोऋचः PQT.

पृष्ठ्यः षडहो ऽतिरात्रः। ९। द्वाविंशतिरात्रेण संवत्सरादेभ्यो लोकेभ्यो ऽमुष्मादादित्यादन्नाद्यमवरुन्धते।१०। अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो ऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च। ११। त्रयोविंशतिरात्रं पशुकामा उपेयुः। १२। अतिरात्रो ज्योतिर्गौरायुर्गौरायुःपञ्चाहो ऽभिप्लवः षडहो द्वादशाहस्य दशाहान्यतिरात्रः। १३। द्वौ चतुर्विंशतिरात्रौ। १४। यं कामं कामयन्ते तमभ्यश्नुवते। १५। अतिरात्रो द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः। १६।

इति तृतीया कण्डिका।

संसदा चतुर्विंशतिरात्रेण स्वर्गे लोके सीदन्ति। १। अतिरात्रश्चतुर्विंश उक्थ्य आरम्भणीयस्त्रिवृद्वा पृष्ठ्यस्तोमः षडहस्त्रयस्त्रिंशमहरनिरुक्तं त्रयस्त्रिंशं निरुक्तं त्रिणवं द्वे एकविंशे त्रिणवं त्रयस्त्रिंशमहर्निरुक्तं त्रयस्त्रिंशमनिरुक्तं पृष्ठ्यस्तोमः षडहः प्रत्यङ् त्रिवृदहर[1]-निरुक्तं ज्योतिष्टोमो वैश्वानरो ऽतिरात्रः। २। पञ्चविंशतिरात्रं पशुकामा उपेयुः। ३। अतिरात्रो द्वाव-

---

१ DE omit अहर्.

सत्राणि



भिप्लवौ द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च। ४। षड्विंशतिरात्रं स्वर्गकामा उपेयुः। ५। अतिरात्रो गोआयुषी द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः। ६। सप्तविंशतिरात्रमन्नाद्यकामा उपेयुः। ७। अतिरात्रो ज्योतिर्गौरायुस्त्र्यहो द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः। ८। अष्टाविंशतिरात्रं पशुकामा उपेयुः। ९। एता एव समहाव्रताः। १०। एकान्नत्रिंशद्रात्रेणापरिमितां श्रियं जयन्ति। ११। अतिरात्रो ज्योतिर्गौरायुर्गौरायुःपञ्चाहो द्वावभिप्लवौ द्वादशाहस्य दशाहान्यतिरात्रः। १२। त्रिंशद्रात्रमन्नाद्यकामा उपेयुः। १३। अतिरात्रस्त्रयो ऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः। १४।

इति चतुर्थी कण्डिका।

---

एकत्रिंशद्रात्रमन्नाद्यकामा उपेयुः। १। एता एव समहाव्रताः। २। द्वात्रिंशद्रात्रं प्रतिष्ठाकामा उपेयुः। ३। अतिरात्रो गोआयुषी त्रयो ऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः। ४। त्रयस्त्र[१]यस्त्रिंशद्रात्राः। ५।

---

१ The first त्रयस् which is not found in any MS. is to be supplied, as the context shows; comp. also Kâtyâyana S'rautas. 24. 2. 24.

यं कामं कामयन्ते तमभ्यश्नुवते ।६। अतिरात्रस्त्रयः पञ्चाहा विश्वजिदतिरात्र एकः पञ्चाहो द्वादशाहस्य दशाहान्यतिरात्रः ।७। द्वितीयं ब्रह्मवर्चसकामा उपेयुः ।८। अतिरात्रो ऽभिप्लवः षडहो ऽतिरात्रो ऽभिप्लवः षडहो ऽतिरात्रो ऽभिप्लवः षडहो द्वादशाहस्य दशाहानि महाव्रतमतिरात्रश्च ।९। तृतीयमृद्धि-कामा उपेयुः ।१०। अतिरात्रस्त्रयः पञ्चाहा अति-रात्रस्त्रयः पञ्चाहा अतिरात्रः ।११। चतुस्त्रिंशद्रात्र-मिन्द्रियकामा उपेयुः ।१२। अतिरात्रो ज्योतिर्गौरा-युस्त्र्यहस्त्रयो ऽभिप्लवा द्वादशाहस्य दशाहानि महा-व्रतमतिरात्रश्च ।१३।

इति पञ्चमी कण्डिका ।

पञ्चत्रिंशद्रात्रं पशुकामा उपेयुः ।१। अतिरात्रो ज्योतिर्गौरायुर्गौरायुःपञ्चाहस्त्रयो ऽभिप्लवा द्वादशा-हस्य दशाहान्यतिरात्रः ।२। षट्त्रिंशद्रात्रं स्वर्गकामा उपेयुः ।३। अतिरात्रश्चत्वारो ऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः ।४। सप्तत्रिंशद्रात्रमन्नाद्यकामा उपेयुः ।५। एता एव समहाव्रताः ।६। अष्टात्रिंशद्रात्रं पशुकामा उपेयुः ।७। अतिरात्रो गोआयुषी चत्वारो

सत्राणि



ऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः। ८। एकान्नचत्वारिंशद्रात्रेणानन्तां श्रियं जयन्ति। ९। अतिरात्रो ज्योतिर्गौरायुस्त्र्यहश्चत्वारो ऽभिप्लवा द्वादशाहस्य दशाहान्यतिरात्रः। १०। चत्वारिंशद्रात्रेण परमायां विराजि प्रतितिष्ठन्ति। ११। एता एव समहाव्रताः। १२।

इति षष्ठी कण्डिका।

सप्तैकस्मान्नपञ्चाशद्रात्रा विधृतयः। १। प्रथमेन[1] वि पाप्मना भ्रातृव्येणावर्तन्ते। २। अतिरात्रस्त्रयस्त्रिवृतो ऽग्निष्टोमा अतिरात्रो दश पञ्चदशा उक्थ्याः षोडशिमदृशममहर[2]तिरात्रो द्वादश सप्तदशा उक्थ्या अतिरात्रः पृष्ठ्यः षडहो ऽतिरात्रो द्वादशैकविंशा उक्थ्या अतिरात्रः। ३। यमातिरात्रो द्वितीयः। ४। यस्मैवैषां श्रीर्भवति मित्रश्च वरुणश्च धाता चार्यमा चांशश्च भगश्चेन्द्रश्च विवस्वांश्चैतासां देवतानामृद्धिमृभुवन्ति। ५। अतिरात्रो द्वावभिप्लवौ गोआयुषी द्वावभिप्लवावभिजिद्वि[3]श्वजिच्चातिरात्रावेको ऽभिप्लवः सर्वस्तोमो नवसप्तदशश्चातिरात्रौ द्वादशाहस्य दशाहानि

१ प्रथमो OPQ. २ षोडशिमदृशममहः is said parenthetically.

३ ॰भिजिच्च वि॰ OP.

